ध्यानात्कर्मफलत्यागस्त्यागाच्छांतिरनंतरम् ॥ १२॥
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ॥
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ॥
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥ १४॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ॥
सर्वारंभपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६॥
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ॥
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७
समः शत्रौ च मित्रे च तथा मानापमानयोः ॥
शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥ १८ ॥
तुल्यनिंदास्तुतिर्मौनी संतुष्टो येनकेनचित् ॥
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९॥
ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ॥
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२०॥
इति श्रीमद्भग० भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीभगवानुवाच ॥ इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते ॥
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥१ ॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥
तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ॥
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥
ऋषिभिर्बहुधा गीतं छंदोभिर्विविधैः पृथक् ॥

ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥
महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ॥
इंद्रियाणि दशैकं च पंच चेंद्रियगोचराः ॥ ५॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ॥
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥
अमानित्वमदंभित्वमहिंसा क्षांतिरार्जवम् ॥
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ॥
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥
असक्तिरनभिष्वंगः पुत्रदारगृहादिषु ॥
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥
ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ॥
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ॥
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥
सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जितम् ॥
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥
बहिरंतश्च भूतानामचरं चरमेव च ॥
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिके च तत् ॥ १५ ॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ॥
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ॥

ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥ १७॥
इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ॥
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥
पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्गुणान् ॥
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥
उपद्रष्टाऽनुमंता च भर्ता भोक्ता महेश्वरः ॥
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ॥
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥
ध्यानेनात्मनि पश्यंति केचिदात्मानमात्मना ॥
अन्ये सांख्येन योगेन कर्मयोगेण चापरे ॥ २४ ॥
अन्ये त्वेवमजानंतः श्रुत्वान्येभ्य उपासते ॥
तेऽपि चातितरंत्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥
यावत्संजायते किंचित्सत्त्वं स्थावरजंगमम् ॥
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥
समं सर्वेषु भूतेषु तिष्ठंतं परमेश्वरम् ॥
विनश्यत्स्वविनश्यंतं यः पश्यति स पश्यति ॥ २७
समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ॥
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम्॥२८
प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ॥
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति ॥

तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥
अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ॥
शरीरस्थोऽपि कौंतेय न करोति न लिप्यते ॥ ३१ ॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ॥
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥
क्षेत्रक्षेत्रज्ञयोरेवमंतरं ज्ञानचक्षुषा ॥
भूतप्रकृतिमोक्षं च ये विदुर्यांति ते परम् ॥ ३४ ॥
इति श्रीम० क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीभगवानुवाच ॥ परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥
सर्गेऽपि नोपजायंते प्रलये न व्यथंति च ॥ २ ॥
मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥
सर्वयोनिषु कौंतेय मूर्तयः संभवंति याः ॥
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥
सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥
निबध्नंति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ॥
सुखसंगेन बध्नाति ज्ञानसंगेन चानघ । ६ ॥
रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् ॥
तन्निबध्नाति कौंतेय कर्मसंगेन देहिनम् ॥ ७ ॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ॥

प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥
सत्त्वं सुखे संजयति रजः कर्मणि भारत ॥
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ॥
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥
सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ॥
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥
लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा ॥
रजस्येतानि जायंते विवृद्धे भरतर्षभ ॥ १२ ॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥
तमस्येतानि जायंते विवृद्धे कुरुनंदन ॥ १३ ॥
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ॥
तदोत्तमविदाँल्लोकानमलान्प्रतिपद्यते ॥ १४ ॥
रजसि प्रलयं गत्वा कर्मसंगिषु जायते ॥
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥
कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ॥
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥
सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ॥
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥
ऊर्ध्वं गच्छंति सत्त्वस्था मध्ये तिष्ठंति राजसाः ॥
जघन्यगुणवृत्तिस्था अधो गच्छंति तामसाः ॥ १८ ॥
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ॥
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥
गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ॥
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥
अर्जुन उवाच ॥ कैर्लिंगैस्त्रीन्गुणानेतानतीतो भवति प्रभो ॥

किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते । २१ ॥
श्रीभगवानुवाच ॥ प्रकाशं च प्रवृत्तिं च मोहमेव च पांडव ॥
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥ २२ ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ॥
गुणा वर्तंत इत्येव योऽवतिष्ठति नेंगते ॥ २३ ॥
समदुःखसुखः स्वस्थः समलोष्टाश्मकांचनः ॥
तुल्यप्रियाप्रियो धीरस्तुल्यनिंदात्मसंस्तुतिः ॥ २४ ॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ॥
सर्वारंभपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ॥
शाश्वतस्य च धर्मस्य सुखस्यैकांतिकस्य च ॥ २७ ॥
इति श्रीमद्भगवद्गी० गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥१४॥

---

श्रीभगवानुवाच । ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥
छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥
अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ॥ अधश्च मूलान्यनुसंततानि कर्मानुबंधीनि मनुष्यलोके ॥ २ ॥
न रूपमस्येह तथोपलभ्यते नांतो न चादिर्न च संप्रतिष्ठा ॥ अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥
ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तंति भूयः ॥ तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्त-
कामाः ॥ द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छंत्यमूढाः
पदमव्ययं तत् ॥ ५ ॥
न तद्भासयते सूर्यो न शशांको न पावकः ॥
यद्गत्वा न निवर्तंते तद्धाम परमं मम ॥ ६ ॥
ममैवांशो जीवलोके जीवभूतः सनातनः ॥
मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥
गृहीत्वैतानि संयाति वायुर्गंधानिवाशयात् ॥ ८ ॥
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥
उत्क्रामंतं स्थितं वापि भुंजानं वा गुणान्वितम् ॥
विमूढा नानुपश्यंति पश्यंति ज्ञानचक्षुषः ॥ १० ॥
यतंतो योगिनश्चैनं पश्यंत्यात्मन्यवस्थितम् ।
यतंतोऽप्यकृतात्मानो नैनं पश्यंत्यचेतसः ॥ ११ ॥
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥
यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् १२ ॥
गामाविश्य च भूतानि धारयाम्यहमोजसा ॥
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ॥
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥
सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपो-
हनं च ॥ वेदैश्च सर्वैरहमेव वेद्यो वेदांतकृद्वेदविदेव
चाहम् ॥ १५ ॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ॥
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ॥
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥२०॥
इति श्रीमद्भ० पुराणपुरुषोत्तमयोगो नाम पंचदशोऽध्यायः ॥ १५ ॥

---

श्रीभगवानुवाच ॥ अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥
अहिंसा सत्यमक्रोधस्त्यागः शांतिरपैशुनम् ॥
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ॥
भवंति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥
दंभो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ॥
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥
दैवी संपद्विमोक्षाय निबंधायासुरी मता ॥
मा शुचः संपदं दैवीमभिजातोऽसि पांडव ॥ ५ ॥
द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ॥
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ॥
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥
प्रभवंत्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥
काममाश्रित्य दुष्पूरं दंभमानमदान्विताः ॥
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्ततेऽशुचिव्रताः ॥ १० ॥
चिंतामपरिमेयां च प्रलयान्तामुपाश्रिताः ॥
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ॥
ईहंते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ॥
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ॥
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः १५ ॥
अनेकचित्तविभ्रांता मोहजालसमावृताः ॥
प्रसक्ताः कामभोगेषु पतंति नरकेऽशुचौ ॥ १६ ॥
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ॥
यजंते नामयज्ञैस्ते दंभेनाविधिपूर्वकम् ॥ १७ ॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ॥
मामात्मपरदेहेषु प्रद्विषंतोऽभ्यसूयकाः ॥ १८ ॥
तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिम् ॥ २० ॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

एतैर्विमुक्तः कौंतेय तमोद्वारैस्त्रिभिर्नरः ॥
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥
इति श्रीमद्भग० दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥
अर्जुन उवाच ॥ ये शास्त्रविधिमुत्सृज्य यजंते श्रद्धयान्विताः ॥
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥
श्रीभगवानुवाच ॥ त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ॥
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥
सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ॥
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥
यजंते सात्त्विका देवान्यक्षरक्षांसि राजसाः ॥
प्रेतान्भूतगणांश्चान्ये यजंते तामसा जनाः ॥ ४ ॥
अशास्त्रविहितं घोरं तप्यंते ये तपो जनाः ॥
दंभाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्षयंतः शरीरस्थं भूतग्राममचेतसः ॥
मां चैवांतःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ॥
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥
आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ॥ रस्याः
स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ॥
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥
यातयामं गतरसं पूतिपर्युषितं च यत् ॥

उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥
अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ॥
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥
अभिसंधाय तु फलं दंभार्थमपि चैव यत् ॥
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥
विधिहीनमसृष्टान्नं मंत्रहीनमदक्षिणम् ॥
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ॥
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ॥
अफलाकांक्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥
सत्कारमानपूजार्थं तपो दंभेन चैव यत् ॥
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥
मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ॥
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥
दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ॥
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥२०
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ॥
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ॥
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥
ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ॥

ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ॥
प्रवर्तंते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥
तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ॥
दानक्रियाश्च विविधाः क्रियंते मोक्षकांक्षिभिः ॥ २५ ॥
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ॥
प्रशस्ते कर्माणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ॥
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥
इति श्रीम० श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

अर्जुन उवाच ॥ संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ॥
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥
श्रीभगवानुवाच ॥ काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ॥
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥
यज्ञदानतपः कर्म न त्याज्यमिति चापरे ॥ ३ ॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ॥
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ॥
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥
एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च ॥
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥
नियतस्य तु संन्यासः कर्मणो नोपपद्यते ॥

मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ॥
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ॥
संगं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥९
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ॥
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥
नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ॥
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ॥
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥१२
पंचैतानि महाबाहो कारणानि निबोध मे ॥
सांख्ये कृतांते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ॥
विविधाश्च पृथक् चेष्टा दैवं चैवात्र पंचमम् ॥ १४ ॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ॥
न्याय्यं वा विपरीतं वा पंचैते तस्य हेतवः ॥ १५ ॥
तत्रैवं सति कर्तारमात्मानं केवलं तु यः ॥
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥
हत्वा स इमाँल्लोकान्न हंति न निबध्यते ॥ १७ ॥
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ॥
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ॥
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥
सर्वभूतेषु येनैकं भावमव्ययमीक्षते ॥

अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ॥
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥
यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ॥
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥
नियतं संगरहितमरागद्वेषतः कृतम् ॥
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ॥
क्रियते वहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥
अनुबंधं क्षयं हिंसामनपेक्ष्य च पौरुषम् ॥
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥
मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः ॥
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ॥
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥
अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ॥
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ॥
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ॥
बंधं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥
यया धर्ममधर्मं च कार्यं चाकार्यमेव च ॥
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥
अधर्मं धर्ममिति या मन्यते तमसा वृत्ता ॥
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥
धृत्या यया धारयते मनःप्राणेंद्रियक्रियाः ॥

योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥
यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ॥
प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ॥
न विमुंचति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ॥
अभ्यासाद्रमते यत्र दुःखांतं च निगच्छति ॥ ३६ ॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ॥
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥
विषयेंद्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ॥
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥
यदग्रे चानुबंधे च सुखं मोहनमात्मनः ॥
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ॥
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ॥
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥
शमो दमस्तपः शौचं क्षांतिरार्जवमेव च ॥
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ॥
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ॥
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥
स्वकर्मनिरतः सिद्धिं यथा विंदति तच्छृणु ॥ ४५ ॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥

स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः ॥ ४६ ॥
श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥
सहजं कर्म कौंतेय सदोषमपि न त्यजेत् ॥
सर्वारंभा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ॥
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ॥
समासेनैव कौंतेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ॥
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ॥
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥
विमुच्य निर्ममः शांतो ब्रह्मभूयाय कल्पते ॥ ५३ ॥
ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ॥
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ॥
ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥ ५५ ॥
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ॥
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ॥
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ॥
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्यसि ॥ ५८ ॥
यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ॥

मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९॥
स्वभावजेन कौंतेय निबद्धः स्वेन कर्मणा ॥
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥६०॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥
भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया ॥ ६१ ॥
तमेव शरणं गच्छ सर्वभावेन भारत ॥
तत्प्रसादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ॥
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥
सर्वगुह्यतमं भूयः शृणु मे परमं वचः ॥
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६॥
इदं ते नातपस्काय नाभक्ताय कदाचन ॥
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७॥
य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ॥
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ॥
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ॥
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ॥

कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥
अर्जुन उवाच। नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत।
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥
संजय उवाच॥ इत्यहं वासुदेवस्य पार्थस्य च महात्मनः॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ॥
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥
राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ॥
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ॥
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥७७॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

इति श्रीमद्भगवद्गीतासु० संन्यासयोगो नाम अष्टादशोऽध्यायः ॥ १८ ॥

इति श्रीमद्भगवद्गीता समाप्ता.

॥ श्री ॥

## ॥ अथ श्रीमद्रामगीता प्रारभ्यते ॥

महादेव उवाच ॥ ततो जगन्मङ्गलमङ्गलात्मना विधाय रामायणकीर्तिमुत्तमाम् ॥ चचार पूर्वाचरितं रघूत्तमो राजर्षिवर्यैरभिसेवितं यथा ॥१॥

सौमित्रिणा पृष्ट उदारबुद्धिना रामः कथाः प्राह पुरातनीः शुभाः ॥ राज्ञः प्रमत्तस्य नृगस्य शापतो द्विजस्य तिर्यक्त्वमथाह राघवः ॥ २ ॥

कदाचिदेकान्त उपस्थितं प्रभुं रामं रमालालितपादपङ्कजम् ॥ सौमित्रिरासादितशुद्धभावनः प्रणम्य भक्त्या विनयान्वितोऽब्रवीत् ॥ ३ ॥

त्वं शुद्धबोधोऽसि हि सर्वदेहिनामात्माऽस्यधीशोऽसि निराकृतिः स्वयम् ॥ प्रतीयसे ज्ञानदृशां महामते पादाब्जभृङ्गाहितसंगसंगिनाम् ॥ ४ ॥

अहं प्रपन्नोऽस्मि पदाम्बुजं प्रभो भवापवर्गं तव योगिभावितम् ॥ यथाञ्जसाऽज्ञानमपारवारिधिं सुखं तरिष्यामि तथानुशाधि माम् ॥ ५ ॥

श्रुत्वाऽथ सौमित्रिवचोऽखिलं तदा प्राह प्रपन्नार्तिहरः प्रसन्नधीः ॥ विज्ञानमज्ञानतमोपशान्तये श्रुतिप्रपन्नं क्षितिपालभूषणः ॥ ६ ॥

आदौ स्ववर्णाश्रमवर्णिताः क्रियाः कृत्वा समासादितशुद्धमानसः ॥ समाप्य तत्पूर्वमुपात्तसाधनः समाश्रयेत्सद्गुरुमात्मलब्धये ॥ ७ ॥

क्रिया शरीरोद्भवहेतुरादृता प्रियाप्रियौ तौ भवतः

सुरागिणः ॥ धर्मेतरौ तत्र पुनः शरीरकं पुनः क्रिया चक्रवदीर्यते भवः ॥ ८ ॥

अज्ञानमेवास्य हि मूलकारणं तद्धानमेवात्रविधौ विधीयते ॥ विद्यैव तन्नाशविधौ पटीयसी न कर्म तज्जं सविरोधमीरितम् ॥ ९ ॥

नाज्ञानहानिर्न च रागसंक्षयो भवेत्ततः कर्म सदोषमुद्भवेत् ॥ ततः पुनः संसृतिरप्यवारिता तस्माद्बुधो ज्ञानविचारवान्भवेत् ॥ १० ॥

ननु क्रिया वेदमुखेन चोदिता यथैव विद्या पुरुषार्थसाधनम् ॥ कर्तव्यता प्राणभृतः प्रचोदिता विद्यासहायत्वमुपैति सा पुनः ॥ ११ ॥

कर्माकृतौ दोषमपि श्रुतिर्जगौ तस्मात्सदा कार्यमिदं मुमुक्षुणा ॥ ननु स्वतन्त्रा ध्रुवकार्यकारिणी विद्या न किंचिन्मनसाप्यपेक्षते ॥ १२ ॥

न सत्यकार्योऽपि हि यद्वदध्वरः प्रकांक्षतेऽन्यानपि कारकादिकान् ॥ तथैव विद्या विधितः प्रकाशितैर्विशिष्यते कर्मभिरेव मुक्तये ॥ १३ ॥

केचिद्वदन्तीति वितर्कवादिनस्तदप्यसद्दृष्टविरोधकारणात् ॥ देहाभिमानादभिवर्धते क्रिया विद्या गताहंकृतितः प्रसिद्ध्यति ॥ १४ ॥

विशुद्धविज्ञानविरोचनाञ्चिता विद्यात्मवृत्तिश्चरमेति भण्यते ॥ उदेति कर्माखिलकारकादिभिर्निहन्ति विद्याऽखिलकारकादिकम् ॥ १५ ॥

तस्मात्त्यजेत्कार्यमशेषतः सुधीर्विद्याविरोधान्न समुच्चयो भवेत् ॥ आत्मानुसंधानपरायणः सदा निवृत्तसर्वेन्द्रियवृत्तिगोचरः ॥ १६ ॥

यावच्छरीरादिषु माययाऽऽत्मधीस्तावद्विधेयो विधिवाद-कर्मणाम् ॥ नेतीति वाक्यैरखिलं निषिद्ध्य तज्ज्ञात्वा परात्मानमथ त्यजेत्क्रियाः ॥ १७ ॥

यदा परात्मात्मविभेदभेदकं विज्ञानमात्मन्यवभाति भास्वरम् ॥ तदैव माया प्रविलीयतेऽञ्जसा सकारका कारणमात्मसंसृतेः ॥ १८ ॥

श्रुतिप्रमाणाभिविनाशिता च सा कथं भविष्यत्यपि कार्यकारिणी ॥ विज्ञानमात्रादमलाद्द्वितीयतस्तस्मादविद्या न पुनर्भविष्यति ॥ १९ ॥

यदि स्म नष्टा न पुनः प्रसूयते कर्ताऽहमस्येति मतिः कथं भवेत् ॥ तस्मात्स्वतन्त्रा न किमप्यपेक्षते विद्या विमोक्षाय विभाति केवला ॥ २० ॥

सा तैत्तिरीयश्रुतिराह सादरं न्यासं प्रशस्ताखिलकर्मणां स्फुटम् ॥ एतावदित्याह च वाजिनां श्रुतिर्ज्ञानं विमोक्षाय न कर्म साधनम् ॥ २१ ॥

विद्यासमत्वेन तु दर्शितस्त्वया क्रतुर्न दृष्टान्त उदाहृतः समः ॥ फलैः पृथक्त्वाद्बहुकारकैः क्रतुः संसाध्यते ज्ञानमतो विपर्ययम् ॥ २२ ॥

सप्रत्यवायो ह्यहमित्यनात्मधीरज्ञप्रसिद्धा नतु तत्त्वद-र्शिनः ॥ तस्माद्बुधैस्त्याज्यमपि क्रियात्मभिर्विधानतः कर्म विधिप्रकाशितम् ॥ २३ ॥

श्रद्धान्वितस्तत्त्वमसीति वाक्यतो गुरोः प्रसादादपि शुद्धमानसः ॥ विज्ञाय चैकात्म्यमथात्मजीवयोः सुखी भवेन्मेरुरिवाप्रकम्पनः ॥ २४ ॥

आदौ पदार्थावगतिर्हि कारणं वाक्यार्थविज्ञानविधौ विधानतः ॥ तत्त्वंपदार्थौ परमात्मजीवकावसीति चैका-

त्म्यमथानयोर्भवेत् ॥ २५ ॥
प्रत्यक्परोक्षादिविरोधमात्मनोर्विहाय संगृह्य तयोश्चि-
दात्मताम् ॥ संशोधितां लक्षणया च लक्षितां ज्ञात्वा
स्वमात्मानमथाद्वयो भवेत् ॥ २६ ॥
एकात्मकत्वाज्जहती न संभवेत्तथाऽजहल्लक्षणता विरो-
धतः ॥ सोऽयंपदार्थाविव भागलक्षणा युज्येत तत्त्वं-
पदयोरदोषतः ॥ २७ ॥
रसादिपञ्चीकृतभूतसंभवं भोगालयं दुःखसुखादिकर्म-
णाम् ॥ शरीरमाद्यन्तवदादिकर्मजं मायामयं स्थूलमुपा-
धिमात्मनः ॥ २८ ॥
सूक्ष्मं मनोबुद्धिदशेन्द्रियैर्युतं प्राणैरपञ्चीकृतभूतसम्भवम्
॥ भोक्तुः सुखादेरनुसाधनं भवेच्छरीरमन्यद्विदुरात्मनो
बुधाः ॥ २९ ॥
अनाद्यनिर्वाच्यमपीह कारणं माया प्रधानं तु परं शरी-
रकम् ॥ उपाधिभेदात्तु यतः पृथक् स्थितं स्वात्मानमा-
त्मन्यवधारयेत्क्रमात् ॥ ३० ॥
कोशेष्वयं तेषु तु तत्तदाकृतिर्विभाति संगात्स्फटिकोपलो
यथा ॥ असंगरूपोऽयमजो यतोऽद्वयो विज्ञायतेऽस्मिन्प-
रितो विचारिते ॥ ३१ ॥
बुद्धेस्त्रिधा वृत्तिरपीह दृश्यते स्वप्नादिभेदेन गुणत्रया-
त्मनः ॥ अन्योन्यतोऽस्मिन्व्यभिचारतो मृषा नित्ये परे
ब्रह्मणि केवले शिवे ॥ ३२ ॥
देहेन्द्रियप्राणमनश्चिदात्मनां सङ्घादजस्रं परिवर्तते
धियः ॥ वृत्तिस्तमोमूलतयाऽज्ञलक्षणा यावद्भवेत्तावदसौ
भवोद्भवः ॥ ३३ ॥
नेतिप्रमाणेन निराकृताखिलो हृदा समास्वादितचिद-

घनामृतः ॥ त्यजेदशेषं जगदात्तसद्रसं पीत्वा यथाऽम्भः प्रजहाति तत्फलम् ॥ ३४ ॥

कदाचिदात्मा न मृतो न जायते न क्षीयते नापि विवर्धते नवः ॥ निरस्तसर्वातिशयः सुखात्मकः स्वयंप्रभः सर्वगतोऽयमद्वयः ॥ ३५ ॥

एवंविधे ज्ञानमये सुखात्मके कथं भवो दुःखमयः प्रतीयते ॥ अज्ञानतोऽध्यासवशात्प्रकाशते ज्ञाने विलीयेत विरोधतः क्षणात् ॥ ३६ ॥

यदन्यदन्यत्र विभाव्यते भ्रमादध्यासमित्याहुरमुं विपश्चितः ॥ असर्पभूतेऽहिविभावनं यथा रज्ज्वादिके तद्वदपीश्वरे जगत् ॥ ३७ ॥

विकल्पमायारहिते चिदात्मकेऽहंकार एषः प्रथमः प्रकल्पितः ॥ अध्यास एवात्मनि सर्वकारणे निरामये ब्रह्मणि केवले परे ॥ ३८ ॥

इच्छादिरागादिसुखादिधर्मिकाः सदा धियः संसृतिहेतवः परे ॥ यस्मात्प्रसुप्तौ तदभावतः परं सुखस्वरूपेण विभाव्यते हि नः ॥ ३९ ॥

अनाद्यविद्योद्भवबुद्धिबिम्बितो जीवः प्रकाशोऽयमितीर्यते चितः ॥ आत्मा धियः साक्षितया पृथक्स्थितो बुद्ध्या परिच्छिन्नपरः स एव हि ॥ ४० ॥

चिद्बिम्बसाक्षात्मधियां प्रसंगतस्त्वेकत्रवासादनलाक्तलोहवत् ॥ अन्योन्यमध्यासवशात्प्रतीयते जडाजडत्वं च चिदात्मचेतसोः ॥ ४१ ॥

गुरोः सकाशादपि वेदवाक्यतः संजातविद्यानुभवो निरीक्ष्य तम् ॥ स्वात्मानमात्मस्थमुपाधिवर्जितं त्यजेदशेषं जडमात्मगोचरम् ॥ ४२ ॥

प्रकाशरूपोऽहमजोऽहमद्वयो सकृद्विभातोऽहमतीव नि-
र्मलः ॥ विशुद्धविज्ञानघनो निरामयः संपूर्ण आनन्द-
मयोऽहमक्रियः ॥ ४३ ॥
सदैव मुक्तोऽहमचिन्त्यशक्तिमानतीन्द्रियज्ञानमविक्रिया-
त्मकः ॥ अनन्तपारोऽहमहर्निशं बुधैर्विभावितोऽहं हृदि
वेदवादिभिः ॥ ४४ ॥
एवं सदाऽऽत्मानमखण्डितात्मना विचार्यमाणस्य वि-
शुद्धभावना ॥ हन्यादविद्यामचिरेण कारकै रसायनं
यद्वदुपासितं रुजः ॥ ४५ ॥
विविक्त आसीन उपारतेन्द्रियो विनिर्जितात्मा विमला-
न्तराशयः ॥ विभावयेदेकमनन्यसाधनो विज्ञानदृक्केवल
आत्मसंस्थितः ॥ ४६ ॥
विश्वं यदेतत्परमात्मदर्शनं विलापयेदात्मनि सर्वका-
रणे ॥ पूर्णश्चिदानन्दमयोऽवतिष्ठते न वेद बाह्यं न च
किंचिदान्तरम् ॥ ४७ ॥
पूर्वं समाधेरखिलं विचिंतयेदोंकारमात्रं सचराचरं ज-
गत् । तदेव वाच्यं प्रणवो हि वाचको विभाव्यतेऽ-
ज्ञानवशान्न बोधतः ॥ ४८ ॥
अकारसंज्ञः पुरुषो हि विश्वको ह्युकारकस्तैजस ईर्यते क्र-
मात् ॥ प्राज्ञो मकारः परिपठ्यतेऽखिलैः समाधिपूर्वं न तु
तत्त्वतो भवेत् ॥ ४९ ॥
विश्वं त्वकारं पुरुषं विलापयेदुकारमध्ये बहुधा व्यव-
स्थितम् ॥ ततो मकारे प्रविलाप्य तैजसं द्वितीयवर्णं
प्रणवस्य चान्तिमे ॥ ५० ॥
मकारमप्यात्मनि चिद्घने परे विलापयेत्प्राज्ञमपीह
कारणम् ॥ सोऽहं परं ब्रह्म सदाविमुक्तिमद्विज्ञानदृङ्

मुक्त उपाधितोऽमलः ॥ ५१ ॥
एवं सदा जातपरात्मभावनः स्वानन्दतुष्टः परिविस्मृताखिलः ॥ आस्ते स नित्यात्मसुखप्रकाशकः साक्षाद्विमुक्तोऽचलवारिसिन्धुवत् ॥ ५२ ॥
एवं सदाऽभ्यस्तसमाधियोगिनो निवृत्तसर्वेन्द्रियगोचरस्य हि ॥ विनिर्जिताशेषरिपोरहं सदा दृश्यो भवेयं जितषड्गुणात्मनः ॥ ५३ ॥
ध्यात्वैवमात्मानमहर्निशं मुनिस्तिष्ठेत्सदा मुक्तसमस्तबन्धनः ॥ प्रारब्धमश्नन्नभिमानवर्जितो मय्येव साक्षात्प्रविलीयते ततः ॥ ५४ ॥
आदौ च मध्ये च तथैव चान्ततो भवं विदित्वा भयशोककारणम् ॥ हित्वा समस्तं विधिवादचोदितं भजेत्स्वमात्मानमथाखिलात्मनाम् ॥ ५५ ॥
आत्मन्यभेदेन विभावयन्निदं भवत्यभेदेन मयाऽऽत्मना तदा ॥ तथा जलं वारिनिधौ यथा पयः क्षीरे वियद्व्योम्न्यनिले यथाऽनिलः ॥ ५६ ॥
इत्थं यदीक्षेत हि लोकसंस्थितो जगन्मृषैवेति विभावयन्मुनिः ॥ निराकृतत्वाच्छ्रुतियुक्तिमानतो यथेन्दुभेदो दिशि दिग्भ्रमादयः ॥ ५७ ॥
यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत् ॥ श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्योऽहमहर्निशं हृदि ॥ ५८ ॥
रहस्यमेतच्छ्रुतिसारसंग्रहं मया विनिश्चित्य तवोदितं प्रिय ॥ यस्त्वेतदालोचयतीह बुद्धिमान्स मुच्यते पातकराशिभिः क्षणात् ॥ ५९ ॥

भ्रातर्यदीदं परिदृश्यते जगन्मायैव सर्वं परिहृत्य चे-
तसा ॥ मद्भावनाभावितशुद्धमानसः सुखी भवानन्द-
मयो निरामयः ॥ ६० ॥
यः सेवते मामगुणं गुणात्परं हृदा कदा वा यदि वा
गुणात्मकम् ॥ सोऽहं स्वपादाश्चितरेणुभिः स्पृशन्
पुनाति लोकत्रितयं यथा रविः ॥ ६१ ॥
विज्ञानमेतदखिलश्रुतिसारमेकं वेदान्तवेद्यचरणेन मयैव
गीतम् ॥ यः श्रद्धया परिपठेद्गुरुभक्तियुक्तो मद्रूपमेति
यदि मद्वचनेषु भक्तिः ॥ ६२ ॥

॥ इति रामगीता समाप्ता ॥



॥ ॐ नमः श्रीगणेशाय ॥



॥ अथ श्रीमद्गणेशगीता प्रारभ्यते ॥

ऋषिरुवाच ॥ एवमेव पुरा पृष्टः शौनकेन महात्मना ॥
स सूतः कथयामास गीतां व्यासमुखाच्छ्रुताम् ॥ १ ॥

सूत उवाच ॥ अष्टादशपुराणोक्तममृतं प्राशितं त्वया ॥
ततोऽतिरसवत्पातुमिच्छाम्यमृतमुत्तमम् ॥ २ ॥
येनामृतमयो भूत्वा पुमान्ब्रह्मामृतं यतः ॥
योगामृतं महाभाग तन्मे करुणया वद ॥ ३ ॥

व्यास उवाच ॥ अथ गीतां प्रवक्ष्यामि योगमार्गप्रकाशिनीम् ॥
नियुक्ता पृच्छते सूत राज्ञे गजमुखेन या ॥ ४ ॥

वरेण्य उवाच ॥ विघ्नेश्वर महाबाहो सर्वविद्याविशारद ॥
सर्वशास्त्रार्थतत्त्वज्ञ योगं मे वक्तुमर्हसि ॥ ५ ॥

श्रीगजानन उवाच ॥सम्यग्व्यवसिता राजन्मतिस्तेऽनुग्रहान्मम॥
शृणु गीतां प्रवक्ष्यामि योगामृतमयीं नृप ॥ ६ ॥
न योगं योगमित्याहुर्योगो योगो न च श्रियः ॥
न योगो विषयैर्योगो न च मात्रादिभिस्तथा ॥ ७॥
योगो यः पितृमात्रादेर्न स योगो नराधिप ॥
यो योगो बन्धुपुत्रादेर्यश्चाष्टभूतिभिः सह ॥ ८ ॥
न स योगस्त्रिया योगो जगदद्भुतरूपया ॥
राज्ययोगश्च नो योगो न योगो गजवाजिभिः ॥ ९॥
योगो नेन्द्रपदस्यापि योगो योगार्थिनः प्रियः ॥
योगो यः सत्यलोकस्य न स योगो मतो मम ॥ १०॥
शैवस्य योगो नो योगो वैष्णवस्य पदस्य यः ॥
न योगो भूप सूर्यत्वं चन्द्रत्वं न कुबेरता ॥ ११ ॥
नानिलत्वं नानलत्वं नामरत्वं न कालता ॥
न वारुण्यं न नैर्ऋत्यं योगो न सार्वभौमता ॥ १२ ॥
योगं नानाविधं भूप युञ्जन्ति ज्ञानिनस्ततम् ॥
भवन्ति वितृषा लोके जिताहारा विरेतसः ॥ १३ ॥
पावयन्त्यखिलान्लोकान्वशीकृतजगत्त्रयाः ॥
करुणापूर्णहृदया बोधयन्त्यपि कांश्चन ॥ १४ ॥
जीवन्मुक्ता ह्रदे मग्नाः परमानन्दरूपिणि ॥
निमील्याक्षीणि पश्यन्तः परं ब्रह्म हृदि स्थितम्॥ १५॥
ध्यायन्तः परमं ब्रह्म चित्ते योगवशीकृतम् ॥
भूतानि स्वात्मना तुल्यं सर्वाणि गणयन्ति ते ॥१६॥
येन केनचिदाच्छिन्ना येन केनचिदाहताः ॥
येन केनचिदाकृष्टा येन केनचिदाश्रिताः ॥ १७ ॥
करुणापूर्णहृदया भ्रमन्ति धरणीतले ॥
अनुग्रहाय लोकानां जितक्रोधा जितेन्द्रियाः ॥ १८ ॥

देहमात्रभृतो भूप समलोष्ठाश्मकाञ्चनाः ॥
एतादृशा महाभाग्याः स्युश्चक्षुर्गोचराः प्रिय ॥ १९ ॥
तमिदानीमहं वक्ष्ये शृणु योगमनुत्तमम् ॥
श्रुत्वा यं मुच्यते जन्तुः पापेभ्यो भवसागरात् ॥ २० ॥
शिवे विष्णौ च शक्तौ च सूर्ये मयि नराधिप ॥
याऽभेदबुद्धिर्योगः स सम्यग्योगो मतो मम ॥ २१ ॥
अहमेव जगद्यस्मात्सृजामि पालयामि च ॥
कृत्वा नानाविधं वेषं संहरामि स्वलीलया ॥ २२ ॥
अहमेव महाविष्णुरहमेव सदाशिवः ॥
अहमेव महाशक्तिरहमेवार्यमा प्रिय ॥ २३ ॥
अहमेको नृणां नाथो जातः पञ्चविधः पुरा ॥
अज्ञानान्मां न जानन्ति जगत्कारणकारणम् ॥ २४ ॥
मत्तोऽग्निरापो धरणी मत्त आकाशमारुतौ ॥
ब्रह्मा विष्णुश्च रुद्रश्च लोकपाला दिशो दश ॥ २५ ॥
वसवो मनवो गावो मनवः पशवोऽपि च ॥
सरितः सागरा यक्षा वृक्षाः पक्षिगणा अपि ॥ २६ ॥
तथैकविंशतिः स्वर्गा नागाः सप्त वनानि च ॥
मनुष्याः पर्वताः साध्याः सिद्धा रक्षोगणास्तथा ॥ २७ ॥
अहं साक्षी जगच्चक्षुरलिप्तः सर्वकर्मभिः ॥
अविकारोऽप्रमेयोऽहमव्यक्तो विश्वगोऽव्ययः ॥ २८ ॥
अहमेव परं ब्रह्माव्ययानन्दात्मकं नृप ॥
मोहयत्यखिलान्माया श्रेष्ठान्मम नरानमून् ॥ २९ ॥
सर्वदा षड्विकारेषु तानियं योजयेत् भृशम् ॥
हित्वाजापटलं जन्तुरनेकैर्जन्मभिः शनैः ॥ ३० ॥
विरज्य विन्दति ब्रह्म विषयेषु सुबोधतः ॥
अच्छेद्यं शस्त्रसंघातैरदाह्यमनलेन च ॥ ३१ ॥

अक्लेद्यं भूप भुवनैरशोष्यं मारुतेन च ॥
अवध्यं वध्यमानेऽपि शरीरेऽस्मिन्नराधिप ॥ ३२ ॥
यामिमां पुष्पितां वाचं प्रशंसन्ति श्रुतीरिताम् ॥
त्रयीवादरता मूढास्ततोऽन्यन्मन्वतेऽपि न ॥ ३३ ॥
कुर्वन्ति सततं कर्म जन्ममृत्युफलप्रदम् ॥
स्वर्गैश्वर्यरता ध्वस्तचेतना भोगबुद्धयः ॥ ३४ ॥
संपादयन्ति ते भूप स्वात्मनः निजबन्धनम् ॥
संसारचक्रं युञ्जन्ति जडाः कर्मपरा नराः ॥ ३५ ॥
यस्य यद्विहितं कर्म तत्कर्तव्यं मदर्पणम् ॥
ततोऽस्य कर्मबीजानामुच्छिन्नाः स्युर्महांकुराः ॥ ३६ ॥
चित्तशुद्धिश्च महती विज्ञानसाधिका भवेत् ॥
विज्ञानेन हि विज्ञातं परं ब्रह्म मुनीश्वरैः ॥ ३७ ॥
तस्मात्कर्माणि कुर्वीत बुद्धियुक्तो नराधिप ॥
न त्वकर्मा भवेत्कोऽपि स्वधर्मत्यागवांस्तथा ॥ ३८ ॥
जहाति यदि कर्माणि ततः सिद्धिं न विन्दति ॥
आदौ ज्ञाने नाधिकारः कर्मण्येव स युज्यते ॥ ३९ ॥
कर्मणा शुद्धहृदयोऽभेदबुद्धिमुपैष्यति ॥
स च योगः समाख्यातोऽमृतत्वाय हि कल्पते ॥ ४० ॥
योगमन्यं प्रवक्ष्यामि शृणु भूप तमुत्तमम् ॥
पशौ पुत्रे तथा मित्रे शत्रौ बन्धौ सुहृज्जने ॥ ४१ ॥
बहिर्दृष्ट्या च समया हृत्स्थयालोकयेत्पुमान् ॥
सुखे दुःखे तथाऽमर्षे हर्षे भीतौ समो भवेत् ॥ ४२ ॥
रोगाप्तौ चैव भोगाप्तौ जये वाविजयेऽपि च ॥
श्रियोऽयोगे च योगे च लाभालाभे मृतावपि ॥ ४३ ॥
समो मां वस्तुजातेषु पश्यन्नन्तर्बहिःस्थितम् ॥
सूर्ये सोमे जले वन्हौ शिवे शक्तौ तथानिले ॥ ४४ ॥

द्विजे हृदि महानद्यां तीर्थे क्षेत्रेऽघनाशिनि ॥
विष्णौ च सर्वदेवेषु तथा यक्षोरगेषु च ॥ ४५ ॥
गन्धर्वेषु मनुष्येषु तथा तिर्यग्भवेषु च ॥
सततं मां हि यः पश्येत्सोऽयं योगविदुच्यते ॥ ४६ ॥
संपराहृत्य स्वार्थेभ्य इन्द्रियाणि विवेकतः ॥
सर्वत्र समताबुद्धिः स योगो भूप मे मतः ॥ ४७ ॥
आत्मानात्मविवेकेन या बुद्धिर्दैवयोगतः ॥
स्वधर्मासक्तचित्तस्य तद्योगो योग उच्यते ॥ ४८ ॥
धर्माधर्मौ जहातीह तया युक्त उभावपि ॥
अतो योगाय युञ्जीत योगो वैधेषु कौशलम् ॥ ४९ ॥
धर्माधर्मफले त्यक्त्वा मनीषी विजितेन्द्रियः ॥
जन्मबन्धाविनिर्मुक्तः स्थानं संयात्यनामयम् ॥ ५० ॥
यदा ह्यज्ञानकालुष्यं जन्तोर्बुद्धिः क्रमिष्यति ॥
तदासौ याति वैराग्यं वेदवाक्यादिषु क्रमात् ॥ ५१ ॥
त्रयीविप्रतिपन्नस्य स्थाणुत्वं यास्यते यदा ॥
परात्मन्यचला बुद्धिस्तदासौ योगमाप्नुयात् ॥ ५२ ॥
मानसानखिलान्कामान्यदा धीमांस्त्यजेत्प्रिय ॥
स्वात्मनि स्वेन संतुष्टः स्थिरबुद्धिस्तदोच्यते ॥ ५३ ॥
वितृष्णः सर्वसौख्येषु नोद्विग्नो दुःखसंगमे ॥
गतसाध्वसरुड्रागः स्थिरबुद्धिस्तदोच्यते ॥ ५४ ॥
यथाऽयं कमठोऽङ्गानि संकोचयति सर्वतः ॥
विषयेभ्यस्तथा खानि संकर्षेद्योगतत्परः ॥ ५५ ॥
व्यावर्तन्तेऽस्य विषयास्त्यक्ताहारस्य वर्ष्मिणः ॥
विना रागं च रागोऽपि दृष्ट्वा ब्रह्म विनश्यति ॥ ५६ ॥
विपश्चिद्यतते भूप स्थितिमास्थाय योगिनः ॥
मन्थयित्वेन्द्रियाण्यस्य हरन्ति बलतो मनः ॥ ५७ ॥

युक्तस्तानि वशे कृत्वा सर्वदा मत्परो भवेत् ॥
संयतानीन्द्रियाणीह यस्यासौ कृतधीर्मतः ॥ ५८ ॥
चिन्तयानस्य विषयान्संगस्तेषूपजायते ॥
कामः संजायते तस्मात्ततः क्रोधोऽभिवर्तते ॥ ५९ ॥
क्रोधादज्ञानसंभूतिर्विभ्रमस्तु ततः स्मृतेः ॥
भ्रंशात्स्मृतेर्मतेर्ध्वंसस्तद्ध्वंसात्सोऽपि नश्यति ॥ ६० ॥
विना द्वेषं च रागं च गोचरान्यस्तु स्वैश्चरेत् ॥
स्वाधीनहृदयो वश्यैः संतोषं स समृच्छति ॥ ६१ ॥
त्रिविधस्यापि दुःखस्य संतोषे विलयो भवेत् ॥
प्रज्ञया संस्थितश्चायं प्रसन्नहृदयो भवेत् ॥ ६२ ॥
विना प्रसादं न मतिर्विना मत्या न भावना ॥
विना तां न शमो भूप विना तेन कुतः सुखम् ॥ ६३ ॥
इन्द्रियाश्वान्विचरतो विषयाननु वर्तते ॥
यन्मनस्तन्मतिं हन्यादप्सु नावं मरुद्यथा ॥ ६४ ॥
या रात्रिः सर्वभूतानां तस्यां निद्राति नैव सः ॥
न स्वपन्तीह ते यत्र सा रात्रिस्तस्य भूमिप ॥ ६५ ॥
सरितां पतिमायान्ति वनानि सर्वतो यथा ॥
आयान्ति यं तथा कामा न स शान्तिं क्वचिल्लभेत् ॥ ६६ ॥
अतस्तानीह संरुध्य सर्वतः खानि मानवः ॥
स्वस्वार्थेभ्यः प्रधावन्ति बुद्धिरस्य स्थिरा तदा ॥ ६७ ॥
ममताहंकृती त्यक्त्वा सर्वान्कामांश्च यस्त्यजेत् ॥
नित्यं ज्ञानरतो भूत्वा ज्ञानान्मुक्तिं स यास्यति ॥ ६८ ॥
एवं ब्रह्मधियं भूप यो विजानाति दैवतः ॥
तुर्यामवस्थां प्राप्यापि जीवन्मुक्तिं प्रयास्यति ॥ ६९ ॥

इति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगणेशपुराणे उत्तरखण्डे गजाननवरेण्यसंवादे सांख्यसारार्थयोगो नाम प्रथमोऽध्यायः ॥ १ ॥

वरेण्य उवाच ॥ ज्ञाननिष्ठा कर्मनिष्ठा द्वयं प्रोक्तं त्वया विभो ॥
अवधार्य वदैकं मे निःश्रेयसकरं नु किम् ॥ १ ॥
गजानन उवाच ॥ अस्मिंश्चराचरे स्थित्यौ पुरोक्ते द्वे मया प्रिय ॥
सांख्यानां बुद्धियोगेन वैधयोगेन कर्मिणाम् ॥ २ ॥
अनारम्भेण वैधानां निष्क्रियः पुरुषो भवेत् ॥
न सिद्धिं याति संत्यागात्केवलात्कर्मणो नृप ॥ ३ ॥
कदाचिदक्रियः कोऽपि क्षणं नैवावतिष्ठते ॥
अस्वतंत्रः प्रकृतिजैर्गुणैः कर्म च कार्यते ॥ ४ ॥
कर्मकारीन्द्रियग्रामं नियम्यास्ते स्मरन्पुमान् ॥
तद्गोचरान्मन्दचित्तो धिगाचारः स भाष्यते ॥ ५ ॥
तद्ग्रामं संनियम्यादौ मनसा कर्म चारभेत् ॥
इन्द्रियैः कर्मयोगं यो वितृष्णः स परो नृप ॥ ६ ॥
अकर्मणः श्रेष्ठतमं कर्मानीहाकृतं तु यत् ॥
वर्ष्मणः स्थितिरप्यस्याकर्मणो नैव सेत्स्यति ॥ ७ ॥
असमर्प्य निबध्यन्ते कर्म तेन जना मयि ॥
कुर्वीत सततं कर्मानाशोऽसंगो मदर्पणम् ॥ ८ ॥
मदर्थे यानि कर्माणि तानि बध्नन्ति न क्वचित् ॥
सवासनमिदं कर्म बध्नाति देहिनं बलात् ॥ ९ ॥
वर्णान्सृष्ट्वावदं चाहं सयज्ञांस्तान्पुरा प्रिय ॥
यज्ञेन ऋध्यतामेष कामदः कल्पवृक्षवत् ॥ १० ॥
सुरांश्चानेन प्रीणध्वं सुरास्ते प्रीणयन्तु वः ॥
लभध्वं परमं स्थानमन्योन्यप्रीणनात्स्थिरम् ॥ ११ ॥
इष्टा देवाः प्रदास्यन्ति भोगानिष्टान्सुतर्पिताः ॥
तैर्दत्तांस्तान्नरस्तेभ्योऽदत्वा भुङ्क्ते स तस्करः ॥ १२ ॥
हुतावशिष्टभोक्तारो मुक्ताः स्युः सर्वपातकैः ॥
अदन्त्येनो महापापा आत्महेतोः पचन्ति ये ॥ १३ ॥

ऊर्जो भवन्ति भूतानि देवादन्नस्य संभवः ॥
यज्ञाच्च देवसंभूतिस्तदुत्पत्तिश्च वैधतः ॥ १४ ॥
ब्रह्मणो वैधमुत्पन्नं मत्तो ब्रह्मसमुद्भवः ॥
अतो यज्ञे च विश्वस्मिन् स्थितं मां विद्धि भूमिप ॥ १५ ॥
संसृतीनां महाचक्रं क्रामितव्यं विचक्षणैः ॥
स मुदा प्रीणते भूपेन्द्रियक्रीडोऽधमो जनः ॥ १६ ॥
अन्तरात्मनि यः प्रीत आत्मारामोऽखिलप्रियः ॥
आत्मतृप्तो नरो यः स्यात्तस्यार्थो नैव विद्यते ॥ १७ ॥
कार्याकार्यकृतीनां स नैवाप्नोति शुभाशुभे ॥
किंचिदस्य न साध्यं स्यात्सर्वजन्तुषु सर्वदा ॥ १८ ॥
अतोऽसक्ततया भूप कर्तव्यं कर्म जन्तुभिः ॥
सक्तोऽगतिमवाप्नोति मामवाप्नोति तादृशः ॥ १९ ॥
परमां सिद्धिमापन्नाः पुरा राजर्षयो द्विजाः ॥
संग्रहाय हि लोकानां तादृशं कर्म चारभेत् ॥ २० ॥
श्रेयान्यत्कुरुते कर्म तत्करोत्यखिलो जनः ॥
मनुते यत्प्रमाणं स तदेवानुसरत्यसौ ॥ २१ ॥
विष्टपे मे न साध्योऽस्ति कश्चिदर्थो नराधिप ॥
अनालब्धश्च लब्धव्यः कुर्वे कर्म तथाप्यहम् ॥ २२ ॥
न कुर्वेऽहं यदा कर्म स्वतन्त्रोऽलसभावितः ॥
करिष्यन्ति मम ध्यानं सर्वे वर्णा महामते ॥ २३ ॥
भविष्यन्ति ततो लोका उच्छिन्नाः संप्रदायिनः ॥
हंता स्यामस्य लोकस्य विधाता संकरस्य च ॥ २४ ॥
कामिनो हि सदा कामैरज्ञानात्कर्मकारिणः ॥
लोकानां संग्रहायैतद्विद्वान् कुर्यादसक्तधीः ॥ २५ ॥
विभिन्नत्वमतिं जह्यादज्ञानां कर्मचारिणाम् ॥
योगयुक्तः सर्वकर्माण्यर्पयेन्मयि कर्मकृत् ॥ २६ ॥

अविद्यागुणसाचिव्यात्कुर्वन्कर्माण्यतन्द्रितः ॥
अहंकाराद्भिन्नबुद्धिरहंकर्तेति योऽब्रवीत् ॥ २७ ॥
यस्तु वेत्त्यात्मनस्तत्त्वं विभागाद्गुणकर्मणोः ॥
करणं विषये वृत्तमिति मत्वा न सज्जते ॥ २८ ॥
कुर्वन्ति सफलं कर्म गुणैस्त्रिभिर्विमोहिताः ॥
अविश्वस्तः स्वात्मद्रुहो विश्वविन्नैव लंघयेत् ॥ २९ ॥
नित्यं नैमित्तिकं तस्मान्मयि कर्मार्पयेद्बुधः ॥
त्यक्त्वाहंममताबुद्धिं परां गतिमवाप्नुयात् ॥ ३० ॥
अनीर्ष्यन्तो भक्तिमन्तो ये मयोक्तमिदं शुभम् ।
अनुतिष्ठन्ति ये सर्वे मुक्तास्तेऽखिलकर्मभिः ॥ ३१ ॥
ये चैव नानुतिष्ठन्ति त्वशुभा हतचेतसः ॥
ईर्ष्यमाणान्महामूढान्भ्रष्टांस्तान्विद्धि मे रिपून् ॥ ३२ ॥
तुल्यं प्रकृत्या कुरुते कर्म यज्ज्ञानवानपि ॥
अनुयाति च तामेवाग्रहस्तत्र मुधा मतः ॥ ३३ ॥
कामश्चैव तथा क्रोधः स्वानामर्थेषु जायते ॥
नैतयोर्वश्यतां यायादस्य विध्वंसकौ यतः ॥ ३४ ॥
शस्तोऽगुणो निजो धर्मः सांगादन्यस्य धर्मतः ॥
निजे तास्मिन्मृतिः श्रेयोऽपरत्र भयदः परः ॥ ३५ ॥
वरेण्य उवाच ॥ पुमान्यत्कुरुते पापं स हि केन नियुज्यते ॥
अकाङ्क्षन्नपि हेरम्ब प्रेरितः प्रबलादिव ॥ ३६ ॥
श्रीगजानन उवाच ॥ कामक्रोधौ महापापौ गुणद्वयसमुद्भवौ ॥
नयन्तौ वश्यतां लोकान् विद्ध्येतौ द्वेषिणौ वरौ ॥३७॥
आवृणोति यथा माया जगद्बाष्पो जलं यथा ॥
वर्षामेघो यथा भानुं तद्वत्कामोऽखिलांश्च रुट् ॥ ३८ ॥
प्रतिपत्तिमतो ज्ञानं छादितं सततं द्विषा ॥
इच्छात्मकेन तरसा दुष्पोष्येण च शुष्मिणा ॥ ३९ ॥

आश्रित्य बुद्धिमनसी इन्द्रियाणि स तिष्ठति ॥
तैरेवाच्छादितप्रज्ञो ज्ञानिनं मोहयत्यसौ ॥ ४० ॥
तस्मान्नियम्य तान्यादौ समनांसि नरो जयेत् ॥
ज्ञानविज्ञानयोः शान्तिकरं पापं मनोभवम् ॥ ४१ ॥
यतस्तानि पराण्याहुस्तेभ्यश्च परमं मनः ॥
ततोऽपि हि परा बुद्धिरात्मा बुद्धेः परो मतः ॥४२॥
बुद्ध्वैवमात्मनात्मानं संस्तभ्यात्मानमात्मना ॥
हत्वा शत्रुं कामरूपं परं पदमवाप्नुयात् ॥ ४३ ॥

इति श्रीमद्गणेशगीतासु० कर्मयोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीगजानन उवाच ॥ पुरा सर्गादिसमये त्रैगुण्यं त्रितनूरुहम् ॥
निर्माय चैनमवदं विष्णवे योगमुत्तमम् ॥ १ ॥
अर्यम्णे सोऽब्रवीत्सोऽपि मनवे निजसूनवे ॥
ततः परंपरायातं विदुरेनं महर्षयः ॥ २ ॥
कालेन बहुना चायं नष्टः स्याच्चरमे युगे ॥
अश्रद्धेयो ह्यविश्वास्यो विगीतव्यश्च भूमिप ॥ ॥ ३ ॥
एवं पुरातनं योगं श्रुतवानसि मन्मुखात् ॥
गुह्याद्गुह्यतरं वेदरहस्यं परमं शुभम् ॥ ४ ॥
वरेण्य उवाच ॥ सांप्रतं चावतीर्णोऽसि गर्भतस्त्वं गजानन ॥
प्रोक्तवान्कथमेतं त्वं विष्णवे योगमुत्तमम् ॥ ५ ॥
गणेश उवाच ॥ अनेकानि च ते जन्मान्यतीतानि ममापि च ॥
संस्मरे तानि सर्वाणि न स्मृतिस्तव वर्तते ॥ ६ ॥
मत्त एव महाबाहो जाता विष्ण्वादयः सुराः ॥
मय्येव च लयं यान्ति प्रलयेषु युगे युगे ॥ ७ ॥
अहमेव परो ब्रह्म महारुद्रोऽहमेव च ॥
अहमेव जगत्सर्वं स्थावरं जङ्गमं च यत् ॥ ८ ॥

अजोऽव्ययोऽहं भूतात्माऽनादिरीश्वर एव च ॥
आस्थाय त्रिगुणां मायां भवामि बहुयोनिषु ॥ ९ ॥
अधर्मोपचयो धर्मापचयो हि यदा भवेत् ॥
साधून्संरक्षितुं दुष्टांस्ताडितुं संभवाम्यहम् ॥१०॥
उच्छिद्याधर्मनिचयं धर्मं संस्थापयामि च ॥
हन्मि दुष्टांश्च दैत्यांश्च नानालीलाकरो मुदा ॥ ११ ॥
वर्णाश्रमान्मुनीन्साधून्पालये बहुरूपधृक् ॥
एवं यो वेत्ति संभूतीर्मम दिव्या युगे युगे ॥ १२ ॥
तत्तत्कर्म च वीर्यं च मम रूपं समासतः ॥
त्यक्ताहंममताबुद्धिं न पुनर्भूः स जायते ॥ १३ ॥
निरीहा निर्भियोरोषा मत्परा मद्व्यपाश्रयाः ॥
विज्ञानतपसा शुद्धा अनेके मामुपागताः ॥१४ ॥
येन येन हि भावेन संसेवन्ते नरोत्तमाः ॥
तथा तथा फलं तेभ्यः प्रयच्छाम्यव्ययः स्फुटम् ॥१५॥
जनाः स्युरितरे राजन्मम मार्गानुयायिनः ॥
तथैव व्यवहारं ते स्वेषु चान्येषु कुर्वते ॥ १६ ॥
कुर्वन्ति देवताप्रीतिं काङ्क्षंतः कर्मणां फलम् ॥
प्राप्नुवंतीह ते लोके शीघ्रं सिद्धिं हि कर्मजाम् ॥ १७॥
चत्वारो हि मया वर्णा रजःसत्त्वतमोंऽशतः ॥
कर्मांशतश्च संसृष्टा मृत्युलोके मयानघ ॥ १८ ॥
कर्तारमपि तेषां मामकर्तारं विदुर्बुधाः ॥
अनादिमीश्वरं नित्यमलिप्तं कर्मजैर्गुणैः ॥ १९ ॥
निरीहं योऽभिजानाति कर्म बध्नाति नैव तम् ॥
चक्रुः कर्माणि बुद्ध्यैवं पूर्वं पूर्वं मुमुक्षवः ॥ २० ॥
वासनासहिताद्याद्यात्संसारकारणाद्दृढात् ॥
अज्ञानबन्धनाज्जन्तुर्बुद्ध्वायं मुच्यतेऽखिलात् ॥२१॥

तदकर्म च कर्मापि कथयाम्यधुना तव ॥
यत्र मौनं गता मोहादृषयो बुद्धिशालिनः ॥ २२ ॥
तत्त्वं मुमुक्षुणा ज्ञेयं कर्माकर्मविकर्मणाम् ॥
त्रिविधानीह कर्माणि मुनिस्त्रैषां गतिः प्रिय ॥ २३ ॥
क्रियायामक्रियाज्ञानमक्रियायां क्रियामतिः ॥
यस्य स्यात्स हि मर्त्येऽस्मिँल्लोके मुक्तोऽखिलार्थकृत् २४
कर्मांकुरवियोगेन यः कर्माण्यारभेन्नरः ॥
तत्त्वदर्शनानिर्दग्धक्रियमाहुर्बुधा बुधम् ॥ २५ ॥
फलतृष्णां विहाय स्यात्सदा तृप्तो विसाधनः ॥
उद्युक्तोऽपि क्रियां कर्तुं किंचिन्नैव करोति सः ॥२६॥
निरीहो निगृहीतात्मा परित्यक्तपरिग्रहः ॥
केवलं वै गृहं कर्माचरन्नायाति पातकम् ॥ २७ ॥
अद्वन्द्वोऽमत्सरो भूत्वा सिद्ध्यसिद्ध्योः समश्च यः ॥
यथाप्राप्त्येह संतुष्टः कुर्वन्कर्म न बध्यते ॥ २८ ॥
अखिलैर्विषयैर्मुक्तो ज्ञानविज्ञानवानपि ॥
यज्ञार्थं तस्य सकलं कृतं कर्म विलीयते ॥ २९ ॥
अहमग्निर्हविर्होता हुतं यन्मयि चार्पितम् ॥
ब्रह्माप्तव्यं च तेनाथ ब्रह्मण्येव यतो रतः ॥ ३० ॥
योगिनः केचिदपरे दिष्टं यज्ञं वदन्ति च ॥
ब्रह्माग्निरेव यज्ञो वै इति केचन मेनिरे ॥ ३१ ॥
संयमाग्नौ परे भूप इन्द्रियाण्युपजुह्वति ॥
स्वाग्निष्वन्ये तद्विषयाञ्छब्दादीनुपजुह्वति ॥ ३२ ॥
प्राणानामिन्द्रियाणां च परे कर्माणि कृत्स्नशः ॥
निजात्मरतिरूपेऽग्नौ ज्ञानदीप्ते प्रजुह्वति ॥ ३३ ॥
द्रव्येण तपसा वापि स्वाध्यायेनापि केचन ॥
तीव्रव्रतेन यतिनो ज्ञानेनापि यजंति माम् ॥ ३४ ॥

प्राणेऽपानं तथा प्राणमपाने प्रक्षिपंति ये ॥
रुद्ध्वा गतीश्चोभयोस्ते प्राणायामपरायणाः ॥ ३५ ॥
जित्वा प्राणान्प्राणगतीरुपजुह्वति तेषु च ॥
एवं नानायज्ञरता यज्ञध्वंसितपातकाः ॥ ३६ ॥
नित्यं ब्रह्म प्रयान्त्येते यज्ञशिष्टामृताशिनः ॥
अयज्ञकारिणो लोको नायमन्यः कुतो भवेत् ॥३७॥
कायिकादित्रिधाभूतान्यज्ञान्वेदे प्रतिष्ठितान् ॥
ज्ञात्वा तानखिलान्भूप मोक्ष्यसेऽखिलबन्धनात् ॥३८॥
सर्वेषां भूप यज्ञानां ज्ञानयज्ञः परो मतः ॥
अखिलं लीयते कर्म ज्ञाने मोक्षस्य साधने ॥ ३९ ॥
तज्ज्ञेयं पुरुषव्याघ्र प्रश्नेन नतितः सताम् ॥
शुश्रूषया वदिष्यन्ति संतस्तत्त्वविशारदाः ॥ ४० ॥
नानासंगाज्जनः कुर्वन्नैकं साधुसमागमम् ॥
करोति तेन संसारे बंधनं समुपैति सः ॥ ४१ ॥
सत्संगाद्गुणसंभूतिरापदां लय एव च ॥
स्वहितं प्राप्यते सर्वैरिह लोके परत्र च ॥ ४२ ॥
इतरत्सुलभं राजन्सत्संगोऽतीव दुर्लभः ॥
यज्ज्ञात्वा न पुनर्बंधमेति ज्ञेयं ततस्ततः ॥ ४३ ॥
ततः सर्वाणि भूतानि स्वात्मन्येवाभिपश्यति ॥
अतिपापरतो जंतुस्ततस्तस्मात्प्रमुच्यते ॥ ४४ ॥
द्विविधान्यपि कर्माणि ज्ञानाग्निर्दहति क्षणात् ॥
प्रसिद्धोऽग्निर्यथा सर्वं भस्मतां नयति क्षणात् ॥ ४५ ॥
न ज्ञानसमतामेति पवित्रमितरन्नृप ॥
आत्मन्येवावगच्छंति योगात्कालेन योगिनः ॥ ४६ ॥
भक्तिमानिंद्रियजयी तत्परो ज्ञानमाप्नुयात् ॥
लब्ध्वा तत्परमं मोक्षं स्वल्पकालेन यात्यसौ ॥ ४७ ॥

भक्तिहीनोऽश्रद्दधानः सर्वत्र संशयी तु यः ॥
तस्य शं नापि विज्ञानमिह लोकोऽथ वा परः ॥ ४८ ॥
आत्मज्ञानरतं ज्ञाननाशिताखिलसंशयम् ॥
योगास्ताखिलकर्माणं बध्नंति भूप तानि न ॥ ४९ ॥
ज्ञानखड्गप्रहारेण संभूतामज्ञतां बलात् ॥
छित्वान्तःसंशयं तस्माद्योगयुक्तो भवेन्नरः ॥ ५० ॥
इति श्रीमद्गणेशगीतासु० विज्ञानप्रतिपादनो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

वरेण्य उवाच ॥ संन्यस्तिश्चैव योगश्च कर्मणां वर्ण्यते त्वया ॥
उभयोर्निश्चितं त्वेकं श्रेयो यद्वद मे प्रभो ॥ १ ॥
श्रीगजानन उवाच । क्रियायोगो वियोगश्चाप्युभौ मोक्षस्य साधने
तयोर्मध्ये क्रियायोगस्त्यागात्तस्य विशिष्यते ॥ २ ॥
द्वन्द्वदुःखसहोऽद्वेष्टा यो न काङ्क्षति किंचन ॥
मुच्यते बन्धनात्सद्यो नित्यं संन्यासवान्सुखम् ॥ ३ ॥
वदन्ति भिन्नफलकौ कर्मणस्त्यागसंग्रहौ ॥
मूढाल्पज्ञास्तयोरेकं संयुञ्जीत विचक्षणः ॥ ४ ॥
यदेव प्राप्यते त्यागात्तदेव योगतः फलम् ॥
संग्रहं कर्मणो योगं यो विन्दाति स विन्दाति ॥ ५ ॥
केवलं कर्मणां न्यासं संन्यासं न विदुर्बुधाः ॥
कुर्वन्नानिच्छया कर्म योगी ब्रह्मैव जायते ॥ ६ ॥
निर्मलो यतचित्तात्मा जितखो योगतत्परः ॥
आत्मानं सर्वभूतस्थं पश्यन्कुर्वन्न लिप्यते ॥ ७ ॥
तत्त्वविद्योगयुक्तात्मा करोमीति न मन्यते ॥
एकादशानीन्द्रियाणि कुर्वन्ति कर्मसंख्यया ॥ ८ ॥
तत्सर्वमर्पयेद्ब्रह्मण्यपि कर्म करोति यः ॥
न लिप्यते पुण्यपापैर्भानुर्जलगतो यथा ॥ ९ ॥

कायिकं वाचिकं बौद्धमैन्द्रियं मानसं तथा ॥
त्यक्त्वाशां कर्म कुर्वन्ति योगज्ञाश्चित्तशुद्धये ॥ १० ॥
योगहीनो नरः कर्म फलेहया करोत्यलम् ॥
बध्यते कर्मबीजैः स ततो दुःखं समश्नुते ॥ ११ ॥
मनसा सकलं कर्म त्यक्त्वा योगी सुखं वसेत् ॥
न कुर्वन्कारयन्वापि नन्दन्श्वभ्रे सुपत्तने ॥ १२ ॥
न क्रिया न च कर्तृत्वं कस्य चित्सृज्यते मया ॥
न क्रियाबीजसंपर्कः शक्त्या तत्क्रियतेऽखिलम् ॥१३॥
कस्यचित्पुण्यपापानि न स्पृशामि विभुर्नृप ॥
ज्ञानमूढा विमुह्यन्ते मोहेनावृतबुद्धयः ॥ १४ ॥
विवेकेनात्मनोऽज्ञानं येषां नाशितमात्मना ॥
तेषां विकाशमायाति ज्ञानमादित्यवत्परम् ॥ १५ ॥
मन्निष्ठा मद्धियोऽत्यन्तं मच्चित्ता मयि तत्पराः ॥
अपुनर्भवमायान्ति विज्ञानान्नाशितैनसः ॥ १६ ॥
ज्ञानविज्ञानसंयुक्ते द्विजे गवि गजादिषु ॥
समेक्षणा महात्मानः पण्डिताः श्वपचे शुनि ॥ १७ ॥
वश्यः स्वर्गो जगत्तेषां जीवन्मुक्ताः समेक्षणाः ॥
यतोऽदोषं ब्रह्म समं तस्मात्तैर्विषयीकृतम् ॥ १८ ॥
प्रियाप्रिये प्राप्य हर्षद्वेषौ ये प्राप्नुवन्ति न ॥
ब्रह्माश्रिता असंमूढा ब्रह्मज्ञाः समबुद्धयः ॥ १९ ॥
वरेण्य उवाच ॥ किं सुखं त्रिषु लोकेषु देवगन्धर्वयोनिषु ॥
भगवन्कृपया तन्मे वद विद्याविशारद ॥ २० ॥
श्रीगजानन उवाच ॥ आनन्दमश्नुतेऽसक्तः स्वात्मारामो निजा-
त्मनि ॥ अविनाशि सुखं तद्धि न सुखं विषयादिषु ॥२१॥
विषयोत्थानि सौख्यानि दुःखानां तानि हेतवः ॥
उत्पत्तिनाशयुक्तानि तत्रासक्तो न तत्त्ववित् ॥ २२ ॥

कारणे सति कामस्य क्रोधस्य सहते च यः ॥
तौ जेतुं वर्ष्मविरहात्स सुखं चिरमश्नुते ॥ २३ ॥
अन्तर्निष्ठोऽन्तःप्रकाशोऽन्तःसुखोऽन्तारतिर्लभेत् ॥
असंदिग्धोऽक्षयं ब्रह्म सर्वभूतहितार्थकृत् ॥ २४ ॥
जेतारः षड्रिपूणां ये शमिनो दमिनस्तथा ॥
तेषां समंततो ब्रह्म स्वात्मज्ञानां विभात्यहो ॥ २५ ॥
आसनेषु समासीनस्त्यक्त्वेमान्विषयान्बहिः ॥
संस्तभ्य भृकुटीमास्ते प्राणायामपरायणः ॥ २६ ॥
प्राणायामं तु संरोधं प्राणापानसमुद्भवम् ॥
वदन्ति मुनयस्तं च त्रिधाभूतं विपश्चितः ॥ २७ ॥
प्रमाणं भेदतो विद्धि लघुमध्यममुत्तमम् ॥
दशभिर्द्व्यधिकैर्वर्णैः प्राणायामो लघुः स्मृतः ॥ २८ ॥
चतुर्विंशत्यक्षरो यो मध्यमः स उदाहृतः ॥
षट्त्रिंशल्लघुवर्णो य उत्तमः सोऽभिधीयते ॥ २९ ॥
सिंहं शार्दूलकं वापि मत्तेभं मृदुतां यथा ॥
नयन्ति प्राणिनस्तद्वत्प्राणापानौ सुसाधयेत् ॥ ३० ॥
पीडयन्ति मृगास्ते न लोकान्वश्यं गता नृप ॥
दहत्येनस्तथा वायुः संस्तब्धो न च तत्तनुम् ॥ ३१ ॥
यथा यथा नरः कश्चित्सोपानावलिमाक्रमेत् ॥
तथा तथा वशीकुर्यात्प्राणापानौ हि योगवित् ॥ ३२ ॥
पूरकं कुम्भकं चैव रेचकं च ततोऽभ्यसेत् ॥
अतीतानागतज्ञानी ततः स्याज्जगतीतले ॥ ३३ ॥
प्राणायामैर्द्वादशभिरुत्तमैर्धारणा मता ॥
योगस्तु धारणे द्वे स्याद्योगीशस्ते सदाभ्यसेत् ॥ ३४ ॥
एवं यः कुरुते राजंस्त्रिकालज्ञः स जायते ॥
अनायासेन तस्य स्याद्वश्यं लोकत्रयं नृप ॥ ३५ ॥

ब्रह्मरूपं जगत्सर्वं पश्यति स्वान्तरात्मनि ॥
एवं योगश्च संन्यासः समानफलदायिनौ ॥ ३६ ॥
जन्तूनां हितकर्तारं कर्मणां फलदायिनम् ॥
मां ज्ञात्वा मुक्तिमाप्नोति त्रैलोक्यस्येश्वरं विभुम् ॥ ३७ ॥
इति श्रीमद्गणेशगीतासु॰ वैधसंन्यासयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीगजानन उवाच। श्रौतस्मार्तानि कर्माणि फलं नेच्छन्समाचरेत्
शस्तः स योगी राजेन्द्र अक्रियाद्योगमाश्रितात् ॥ १ ॥
योगप्राप्त्यै महाबाहो हेतुः कर्मैव मे मतम् ॥
सिद्धियोगस्य संसिध्यै हेतू शमदमौ मतौ ॥ २ ॥
इन्द्रियार्थांश्च संकल्प्य कुर्वंस्स्वस्य रिपुर्भवेत् ॥
एताननिच्छन्यः कुर्वन्सिद्धिं योगी स सिद्ध्यति ॥३॥
सुहृत्त्वे च रिपुत्वे च उद्धारे चैव बन्धने ॥
आत्मनैवात्मनो ह्यात्मा नात्मा भवति कश्चन ॥ ४ ॥
मानेऽपमाने दुःखे च सुखेऽसुहृदि साधुषु ॥
मित्रेऽमित्रेऽप्युदासीने द्वेष्ये लोष्ठे च काञ्चने ॥ ५ ॥
समो जितात्मा विज्ञानी ज्ञानीन्द्रियजयावहः ॥
अभ्यसेत्सततं योगं यदा युक्ततमो हि सः ॥ ६ ॥
तप्तः श्रान्तो व्याकुलो वा क्षुधितो व्यग्रचित्तकः ॥
कालेऽतिशीतेऽत्युष्णे वानिलाग्न्यम्बुसमाकुले ॥ ७ ॥
सध्वनावतिजीर्णे गोःस्थाने साग्नौ जलान्तिके ॥
कूपकूले श्मशाने च नद्यां भित्तौ च मर्मरे ॥ ८ ॥
चैत्ये सवल्मिके देशे पिशाचादिसमावृते ॥
नाभ्यसेद्योगविद्योगं योगध्यानपरायणः ॥ ९ ॥
स्मृतिलोपश्च मूकत्वं बाधिर्यं मन्दता ज्वरः ॥
जडता जायते सद्यो दोषाज्ञानाद्धि योगिनः ॥ १० ॥

एते दोषाः परित्याज्या योगाभ्यसनशालिना ॥
अनादरे हि चैतेषां स्मृतिलोपादयो ध्रुवम् ॥ ११ ॥
नातिभुञ्जन्सदा योगी नाभुञ्जन्नातिनिद्रितः ॥
नातिजाग्रत्सिद्धिमेति भूप योगं सदाभ्यसन् ॥ १२ ॥
संकल्पजांस्त्यजेत्कामान्नियताहारजागरः ॥
नियम्य खगणं बुद्ध्या विरमेत शनैः शनैः ॥ १३ ॥
ततस्ततः कृषेदेतद्यत्र यत्रानुगच्छति ॥
धृत्यात्मवशगं कुर्याच्चित्तं चञ्चलमादृतः ॥ १४ ॥
एवं कुर्वन्सदा योगी परां निर्वृतिमृच्छति ॥
विश्वस्मिन्निजमात्मानं विश्वं च स्वात्मनीक्षते ॥ १५ ॥
योगेन यो मामुपैति तमुपैम्यहमादरात् ॥
मोचयामि न मुञ्चामि तमहं मां स न त्यजेत् ॥ १६ ॥
सुखे सुखेतरे द्वेषे क्षुधि तोषे समस्तृषि ॥
आत्मसाम्येन भूतानि सर्वगं मां च वेत्ति यः ॥ १७ ॥
जीवन्मुक्तः स योगीन्द्रः केवलं मयि संगतः ॥
ब्रह्मादीनां च देवानां स वंद्यः स्याज्जगत्त्रये ॥ १८ ॥
वरेण्य उवाच ॥ द्विविधोऽपि हि योगोऽयमसंभाव्यो हि मे मतः
यतोऽन्तःकरणं दुष्टं चञ्चलं दुर्ग्रहं विभो ॥ १९ ॥
श्रीगजानन उवाच ॥ यो निग्रहं दुर्ग्रहस्य मनसः संप्रकल्पयेत् ॥
घटीयन्त्रसमादस्मान्मुक्तः संसृतिचक्रकात् ॥ २० ॥
विषयैः क्रकचैरेतत्संसृष्टं चक्रकं दृढम् ॥
जनश्छेत्तुं न शक्नोति कर्मकीलैः सुसंवृतम् ॥ २१ ॥
अतिदुःखं च वैराग्यं भोगाद्वैतृष्ण्यमेव च ॥
गुरुप्रसादः सत्सङ्ग उपायास्तज्जये अमी ॥ २२ ॥
अभ्यासाद्वा वशीकुर्यान्मनो योगस्य सिद्धये ॥
वरेण्य दुर्लभो योगो विनास्य मनसो जयात् ॥ २३ ॥

वरेण्य उवाच ॥ योगभ्रष्टस्य को लोकः का गतिः किं फलं भवेत्
विभो सर्वज्ञ मे छिन्धि संशयं बुद्धिचक्रभृत् ॥ २४ ॥
श्रीगजानन उवाच ॥ दिव्यदेहधरो योगाद्भ्रष्टः स्वर्भोगमुत्तमम्
भुक्त्वा योगिकुले जन्म लभेच्छुद्धिमतां कुले ॥ २५ ॥
पुनर्योगी भवत्येष संस्कारात्पूर्वकर्मजात् ॥
न हि पुण्यकृतां कश्चिन्नरकं प्रतिपद्यते ॥ २६ ॥
ज्ञाननिष्ठात्तपोनिष्ठात्कर्मनिष्ठान्नराधिप ॥
श्रेष्ठो योगी श्रेष्ठतमो भक्तिमान्मयि तेषु यः ॥ २७ ॥

इति श्रीमद्गणेशगीतासु॰ योगावृत्तिप्रशंसनो नाम पञ्चमोऽध्यायः ॥ ५ ॥

श्रीगजानन उवाच ॥ ईदृशं विद्धि मे तत्त्वं मद्गतेनान्तरात्मना ॥
यज्ज्ञात्वा मामसंदिग्धं वेत्सि मोक्ष्यसि सर्वगम् ॥१॥
तत्तेऽहं शृणु वक्ष्यामि लोकानां हितकाम्यया ॥
अस्ति ज्ञेयं यतो नान्यन्मुक्तेश्च साधनं नृप ॥ २ ॥
ज्ञेया मत्प्रकृतिः पूर्वं ततः स्यां ज्ञानगोचरः ॥
ततो विज्ञानसंपत्तिर्मयि ज्ञाते नृणां भवेत् ॥ ३ ॥
क्ष्मनलौ खमहंकारः कं चित्तं धीसमीरणौ ॥
रवीन्दू यागकृच्चैकादशधा प्रकृतिर्मम ॥ ४ ॥
अन्यां मत्प्रकृतिं वृद्धा मुनयः संगिरन्ति च ॥
तथा त्रिविष्टपं व्याप्तं जीवत्वं गतयानया ॥ ५ ॥
आभ्यामुत्पाद्यते सर्वं चराचरमयं जगत्
संगाद्विश्वस्य संभूतिः परित्राणं लयोऽप्यहम् ॥ ६ ॥
तत्त्वमेतन्निबोद्धुं मे यतते कश्चिदेव हि ॥
वर्णाश्रमवतां पुंसां पुरा चीर्णेन कर्मणा ॥ ७ ॥
साक्षात्करोति मां कश्चिद्यत्नवत्स्वपि तेषु च ॥
मत्तोऽन्यन्नेक्षते किंचिन्मयि सर्वं च वीक्षते ॥ ८ ॥
क्षितौ सुगन्धरूपेण तेजोरूपेण चाग्निषु ॥

प्रभारूपेण पूष्णयब्जे रसरूपेण चाप्सु च ॥ ९ ॥
धीतपोबलिनां चाहं धीस्तपोबलमेव च ॥
त्रिविधेषु विकारेषु मदुत्पन्नेष्वहं स्थितः ॥ १० ॥
न मां विन्दति पापीयान्मायामोहितचेतनः ॥
त्रिविकारा मोहयति प्रकृतिर्मे जगत्त्रयम् ॥ ११ ॥
यो मे तत्त्वं विजानाति मोहं त्यजति सोऽखिलम् ॥
अनेकैर्जन्मभिश्चैवं ज्ञात्वा मां मुच्यते ततः ॥ १२ ॥
अन्ये नानाविधान्देवान्भजन्ते तान्व्रजन्ति ते ॥
यथा यथा मतिं कृत्वा भजते मां जनोऽखिलः ॥ १३
तथा तथास्य तं भावं पूरयाम्यहमेव तम् ॥
अहं सर्वं विजानामि मां न कश्चिद्विबुध्यते ॥ १४ ॥
अव्यक्तं व्यक्तिमापन्नं न विदुः काममोहिताः ॥
नाहं प्रकाशतां यामि अज्ञानां पापकर्मणाम् ॥ १५
यः स्मृत्वा त्यजति प्राणमन्ते मां श्रद्धयान्वितः ॥
स यात्यपुनरावृत्तिं प्रसादान्मम भूभुज ॥ १६ ॥
यं यं देवं स्मरन्भक्त्या त्यजति स्वं कलेवरम् ॥
तत्तत्सालोक्यमायाति तत्तद्भक्त्या नराधिप ॥ १७
अतश्चाहर्निशं भूप स्मर्तव्योऽनेकरूपवान् ॥
सर्वेषामप्यहं गम्यः स्रोतसामर्णवो यथा ॥ १८ ॥
ब्रह्मविष्णुशिवेन्द्राद्याँल्लोकान्प्राप्य पुनः पतेत् ॥
यो मामुपैत्यसंदिग्धः पतनं तस्य न क्वचित् ॥ १९
अनन्यशरणो यो मां भक्त्या भजति भूमिप ॥
योगक्षेमौ च तस्याहं सर्वदा प्रतिपादये ॥ २० ॥
द्विविधा गतिरुद्दिष्टा शुक्ला कृष्णा नृणां नृप ॥
एकया परमं ब्रह्म परया याति संसृतिम् ॥ २१ ॥
इति श्रीमद्गणेशगीतासु० बुद्धियोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

वरेण्य उवाच ॥ का शुक्ला गतिरुद्दिष्टा का च कृष्णा गजानन ॥
किं ब्रह्म संसृतिः का मे वक्तुमर्हस्यनुग्रहात् ॥ १ ॥
श्रीगजानन उवाच ॥ अग्निर्ज्योतिरहः शुक्ला कर्मार्हमयनं गतिः ॥
चान्द्रं ज्योतिस्तथा धूमो रात्रिश्च दक्षिणायनम् ॥२॥
कृष्णैते ब्रह्म संसृत्योरवाप्तेः कारणं गती ॥
दृश्यादृश्यमिदं सर्वं ब्रह्मैवेत्यवधारय ॥ ३ ॥
क्षरं पञ्चात्मकं विद्धि तदन्तरक्षरं स्मृतम् ॥
उभाभ्यां यदतिक्रान्तं शुद्धं विद्धि सनातनम् ॥ ४ ॥
अनेकजन्मसंभूतिः संसृतिः परिकीर्तिता ॥
संसृतिं प्राप्नुवन्त्येते ये तु मां गणयन्ति न ॥ ५ ॥
ये मां सम्यगुपासन्ते परं ब्रह्म प्रयान्ति ते ॥
ध्यानाद्यैरुपचारैर्मां तथा पञ्चामृतादिभिः ॥ ६ ॥
स्नानवस्त्राद्यलंकारसुगन्धधूपदीपकैः ॥
नैवेद्यैः फलताम्बूलैर्दक्षिणाभिश्च योऽर्चयेत् ॥ ७ ॥
भक्त्यैकचेतसा चैव तस्येष्टं पूरयाम्यहम् ॥
एवं प्रतिदिनं भक्त्या मद्भक्तो मां समर्चयेत् ॥ ८ ॥
अथवा मानसीं पूजां कुर्वीत स्थिरचेतसा ॥
अथवा फलपत्राद्यैः पुष्पमूलजलादिभिः ॥ ९ ॥
पूजयेन्मां प्रयत्नेन तत्तदिष्टं फलं लभेत् ॥
त्रिविधास्वपि पूजासु श्रेयसी मानसी मता ॥ १० ॥
साप्युत्तमा मता पूजानिच्छया या कृता मम ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिश्च यः ॥ ११ ॥
एकां पूजां प्रकुर्वाणोऽप्यन्यो वा सिद्धिमृच्छति ॥
मदन्यदेवं यो भक्त्या द्विषन्मामन्यदेवताम् ॥ १२ ॥
सोऽपि मामेव यजते परं त्वविधितो नृप ॥
यो ह्यन्यदेवतां मां च द्विषन्नन्यां समर्चयेत् ॥ १३ ॥

याति कल्पसहस्रं स निरयान्दुःखभाक् सदा ॥
भूतशुद्धिं विधायादौ प्राणानां स्थापनं ततः ॥ १४ ॥
आकृष्य चेतसो वृत्तिं ततो न्यासमुपक्रमेत् ॥
कृत्वान्तर्मातृकान्यासं बहिश्चाथ षडङ्गकम् ॥ १५ ॥
न्यासं च मूलमंत्रस्य ततो ध्यात्वा जपेन्मनुम् ॥
स्थिरचित्तो जपेन्मत्रं यथा गुरुमुखागतम् ॥ १६ ॥
जपं निवेद्य देवाय स्तुत्वा स्तोत्रैरनेकधा ॥
एवं मां य उपासीत स लभेन्मोक्षमव्ययम् ॥ १७ ॥
य उपासनया हीनो धिङ्नरो व्यर्थजन्मभाक् ॥
यज्ञोऽहमौषधं मन्त्रोऽग्निराज्यं च हविर्हुतम् ॥ १८ ॥
ध्यानं ध्येयं स्तुतिं स्तोत्रं नतिर्भक्तिरुपासना ॥
त्रयीज्ञेयं पवित्रं च पितामहपितामहः ॥ १९ ॥
ॐकारः पावनः साक्षी प्रभुर्मित्रं गतिर्लयः ॥
उत्पत्तिः पोषको बीजं शरणं वास एव च ॥ २० ॥
असन्मृत्युः सदमृतमात्मा ब्रह्माहमेव च ॥
दानं होमस्तपो भक्तिर्जपः स्वाध्याय एव च ॥ २१ ॥
यद्यत्करोति तत्सर्वं स मे मयि निवेदयेत् ॥
योषितोऽथ दुराचाराः पापास्त्रैवर्णिकास्तथा ॥ २२ ॥
मदाश्रया विमुच्यन्ते किं मद्भक्त्या द्विजादयः ॥
न विनश्यति मद्भक्तो ज्ञात्वेमा मद्विभूतयः ॥ २३ ॥
प्रभवं मे विभूतीश्च न देवा ऋषयो विदुः ॥
नानाविभूतिभिरहं व्याप्य विश्वं प्रतिष्ठितः ॥ २४ ॥
यद्यच्छ्रेष्ठतमं लोके सा विभूतिर्निबोध मे ॥ २५ ॥
इति श्रीमद्गणेशगीतासु० उपासनायोगो नाम सप्तमोऽध्यायः ॥ ७ ॥
वरेण्य उवाच ॥ भगवन्नारदो मह्यं तव नाना विभूतयः ॥
उक्तवांस्ता अहं वेद न सर्वाः सोऽपि वेत्ति ताः ॥ १

त्वमेव तत्त्वतः सर्वा वेत्सि ता द्विरदानन ॥
निजं रूपमिदानीं मे व्यापकं चारु दर्शय ॥ २ ॥
श्रीगजानन उवाच ॥ एकस्मिन्मयि पश्य त्वं विश्वमेतच्चराचरम् ॥
नानाश्चर्याणि दिव्यानि पुराऽदृष्टानि केनचित् ॥ ३ ॥
ज्ञानचक्षुरहं तेऽद्य सृजामि स्वप्रभावतः ॥
चर्मचक्षुः कथं पश्येन्मां विभुं ह्यजमव्ययम् ॥ ४ ॥
क उवाच ॥ ततो राजा वरेण्यः स दिव्यचक्षुरवैक्षत ॥
ईशितुः परमं रूपं गजास्यस्य महाद्भुतम् ॥ ५ ॥
असंख्यवक्त्रं ललितमसंख्यांघ्रिकरं महत् ॥
अनुलिप्तं सुगन्धेन दिव्यभूषाम्बरस्रजम् ॥ ६ ॥
असंख्यनयनं कोटिसूर्यरश्मिधृतायुधम् ॥
तद्वर्ष्मणि त्रयो लोका दृष्टास्तेन पृथग्विधाः ॥ ७ ॥
दृष्ट्वैश्वरं परं रूपं प्रणम्य स नृपोऽब्रवीत् ॥
वरेण्य उवाच ॥ वीक्षेऽहं तव देहेऽस्मिन्देवानृषिगणान्पितॄन् ॥८॥
पातालानां समुद्राणां द्वीपानां चैव भूभृताम् ॥
महर्षीणां सप्तकं च नानार्थैः संकुलं विभो ॥ ९ ॥
भुवोऽन्तरिक्षस्वर्गांश्च मनुष्योरगराक्षसान् ॥
ब्रह्मविष्णुमहेशेन्द्रान्देवान्जन्तूननेकधा ॥ १० ॥
अनाद्यनन्तं लोकादिमनन्तभुजशीर्षकम् ॥
प्रदीप्तानलसंकाशमप्रमेयं पुरातनम् ॥ ११ ॥
किरीटकुण्डलधरं दुर्निरीक्ष्यं मुदावहम् ॥
एतादृशं च वीक्षे त्वां विशालवक्षसं प्रभुम् ॥१२॥
सुरविद्याधरैर्यक्षैः किन्नरैर्मुनिमानुषैः ॥
नृत्यद्भिरप्सरोभिश्च गन्धर्वैर्गानतत्परैः ॥ १३ ॥
वसुरुद्रादित्यगणैः सिद्धैः साध्यैर्मुदा युतैः ॥
सेव्यमानं महाभक्त्या वीक्ष्यमाणं सुविस्मितैः ॥ १४ ॥

वेत्तारमक्षरं वेद्यं धर्मगोप्तारमीश्वरम् ॥
पातालानि दिशः स्वर्गान्भुवं व्याप्याऽखिलं स्थितम् ॥ १५ ॥
भीता लोकास्तथा चाहमेवं त्वां वीक्ष्य रूपिणम् ॥
नानादंष्ट्राकरालं च नानाविद्याविशारदम् ॥ १६ ॥
प्रलयानलदीप्तास्यं जटिलं च नभःस्पृशम् ॥
दृष्ट्वा गणेश ते रूपमहं भ्रान्त इवाभवम् ॥ १७ ॥
देवा मनुष्यनागाद्याः खलास्त्वदुदरेशयाः ॥
नानायोनिभुजश्चान्ते त्वय्येव प्रविशन्ति च ॥ १८ ॥
अब्धेरुत्पद्यमानास्ते यथाजीमूतबिन्दवः ॥
त्वामिन्द्रोऽग्निर्यमश्चैव निर्ऋतिर्वरुणो मरुत् ॥ १९ ॥
गुह्यकेशस्तथेशानः सोमः सूर्योऽखिलं जगत् ॥
नमामि त्वामतः स्वामिन्प्रसादं कुरु मेऽधुना ॥ २० ॥
दर्शयस्व निजं रूपं सौम्यं यत्पूर्वमीक्षितम् ॥
को वेद लीलास्ते भूमन् क्रियमाणा निजेच्छया ॥ २१ ॥
अनुग्रहान्मया दृष्टमैश्वरं रूपमीदृशम् ॥
ज्ञानचक्षुर्यतो दत्तं प्रसन्नेन त्वया मम ॥ २२ ॥
श्रीगजानन उवाच ॥ नेदं रूपं महाबाहो मम पश्यन्त्ययोगिनः ॥
सनकाद्या नारदाद्याः पश्यन्ति मदनुग्रहात् ॥ २३ ॥
चतुर्वेदार्थतत्त्वज्ञाः सर्वशास्त्रविशारदाः ॥
यज्ञदानतपोनिष्ठा न मे रूपं विदन्ति ते ॥ २४ ॥
शक्योऽहं वीक्षितुं ज्ञातुं प्रवेष्टुं भक्तिभावतः ॥
त्यज भीतिं च मोहं च पश्य मां सौम्यरूपिणम् ॥ २५ ॥
मद्भक्तो मत्परः सर्वसंगहीनो मदर्थकृत् ॥
निष्क्रोधः सर्वभूतेषु समो मामेति भूभुज ॥ २६ ॥
इति श्रीमद्गणेशगीतासु० विश्वरूपदर्शनो नामाष्टमोऽध्यायः ॥ ८ ॥
वरेण्य उवाच ॥ अनन्यभावस्त्वां सम्यङ्मूर्तिमन्तमुपासते ॥

योऽक्षरं परमव्यक्तं तयोः कस्ते मतोऽधिकः ॥ १ ॥
असि त्वं सर्ववित्साक्षी भूतभावन ईश्वरः ॥
अतस्त्वां परिपृच्छामि वद मे कृपया विभो ॥ २ ॥
श्रीगजानन उवाच ॥ यो मां मूर्तिधरं भक्त्या मद्भक्तः परिसेवते ॥
स मे मान्योऽनन्यभक्तिर्नियुज्य हृदयं मयि ॥ ३ ॥
खगणं स्ववशं कृत्वाखिलभूतहितार्थकृत् ॥
ध्येयमक्षरमव्यक्तं सर्वगं कूटगं स्थिरम् ॥ ४ ॥
सोऽपि मामेत्यनिर्देश्यं मत्परो य उपासते ॥
संसारसागरादस्मादुद्धरामि तमप्यहम् ॥ ५ ॥
अव्यक्तोपासनाद्दुःखमधिकं तेन लभ्यते ॥
व्यक्तस्योपासनात्साध्यं तदेवाव्यक्तभक्तितः ॥ ६ ॥
भक्तिश्चैवादरश्चात्र कारणं परमं मतम् ॥
सर्वेषां विदुषां श्रेष्ठो ह्यकिंचिज्ज्ञोऽपि भक्तिमान् ॥ ७ ॥
भजन्भक्त्या विहीनो यः स चाण्डालोऽभिधीयते ॥
चाण्डालोऽपि भजन्भक्त्या ब्राह्मणेभ्योऽधिको मम ॥८॥
शुकाद्याः सनकाद्याश्च पुरा मुक्ता हि भक्तितः ॥
भक्त्यैव मामनुप्राप्ता नारदाद्याश्चिरायुषः ॥ ९ ॥
अतो भक्त्या मयि मनो विधेहि बुद्धिमेव च ॥
भक्त्या यजस्व मां राजंस्ततो मामेव यास्यसि ॥१०॥
असमर्थोऽर्पितुं स्वान्तं एवं मयि नराधिप ॥
अभ्यासेन च योगेन ततो गन्तुं यतस्व माम् ॥ ११ ॥
तत्रापि त्वमशक्तश्चेत्कुरु कर्म मदर्पणम् ॥
मामनुग्रहतश्चैवं परां निर्वृतिमेष्यसि ॥ १२ ॥
अथैतदप्यनुष्ठातुं न शक्तोऽसि तदा कुरु ॥
प्रयत्नतः फलत्यागं त्रिविधानां हि कर्मणाम् ॥ १३ ॥
श्रेयसी बुद्धिरावृत्तेस्ततो ध्यानं परं मतम् ॥

ततोऽखिलपरित्यागस्ततः शान्तिर्गरीयसी ॥ १४ ॥
निरहंममताबुद्धिरद्वेषः शरणः समः ॥
लाभालाभे सुखे दुःखे मानामाने स मे प्रियः ॥१५॥
यं वीक्ष्य न भयं याति जनस्तस्मान्न च स्वयम् ॥
उद्वेगभीः कोपमुद्भीरहितो यः स मे प्रियः ॥ १६ ॥
रिपौ मित्रेऽथ गर्हायां स्तुतौ शोके समः समुत् ॥
मौनी निश्चलधीभक्तिरसंगः स च मे प्रियः ॥ १७ ॥
संशीलयति यश्चैनमुपदेशं मया कृतं ॥
स वंद्यः सर्वलोकेषु मुक्तात्मा मे प्रियः सदा ॥१८॥
अनिष्टाप्तौ च न द्वेष्टीष्टप्राप्तौ च न तुष्यति ॥
क्षेत्रतज्ज्ञौ च यो वेत्ति स मे प्रियतमो भवेत् ॥ १९ ॥
वरेण्य उवाच ॥ किं क्षेत्रं कश्च तद्वेत्ति किं तज्ज्ञानं गजानन ॥
एतदाचक्ष्व मह्यं त्वं पृच्छते करुणाम्बुधे ॥ २० ॥
श्रीगजानन उवाच ॥ पञ्च भूतानि तन्मात्राः पञ्च कर्मेन्द्रियाणि च । अहंकारो मनो बुद्धिः पञ्च ज्ञानेन्द्रियाणि च ॥ २१ ॥
इच्छाव्यक्तं धृतिद्वेषौ सुखदुःखे तथैव च ॥
चेतनासहितश्चायं समूहः क्षेत्रमुच्यते ॥ २२ ॥
तज्ज्ञं त्वं विद्धि मां भूप सर्वान्तर्यामिणं विभुम् ॥
अयं समूहोऽहं चापि यज्ज्ञानविषयौ नृप ॥ २३ ॥
आर्जवं गुरुशुश्रूषा विरक्तिश्चेन्द्रियार्थतः ॥
शौचं क्षान्तिरदंभश्च जन्मादिदोषवीक्षणम् ॥ २४ ॥
समदृष्टिर्दृढा भक्तिरेकान्तित्वं शमो दमः ॥
एतैर्यच्च युतं ज्ञानं तज्ज्ञानं विद्धि बाहुज ॥ २५ ॥
तज्ज्ञानविषयं राजन्ब्रवीमि त्वं शृणुष्व मे ॥
यज्ज्ञात्वैति च निर्वाणं मुक्त्वा संसृतिसागरम् ॥ २६ ॥
यदनादीन्द्रियैर्हीनं गुणभुग्गुणवर्जितम् ॥

अव्यक्तं सदसद्भिन्नमिन्द्रियार्थावभासकम् ॥ २७ ॥
विश्वभृच्चाखिलव्यापि त्वेकं नानेव भासते ॥
बाह्याभ्यन्तरतः पूर्णमसंगं तमसः परम् ॥ २८ ॥
दुर्ज्ञेयं चातिसूक्ष्मत्वाद्दीप्तानामपि भासकम् ॥
ज्ञेयमेतादृशं विद्धि ज्ञानगम्यं पुरातनम् ॥ २९ ॥
एतदेव परं ब्रह्म ज्ञेयमात्मा परोऽव्ययः ॥
गुणान्प्रकृतिजान्भुङ्क्ते पुरुषः प्रकृतेः परः ॥ ३० ॥
गुणैस्त्रिभिरियं देहे बध्नाति पुरुषं दृढम् ॥
यदा प्रकाशः शांतिश्च वृद्धे सत्त्वं तदाधिकम् ॥ ३१ ॥
लोभोऽशमः स्पृहारम्भः कर्मणां रजसो गुणः ॥
मोहोऽप्रवृत्तिश्चाज्ञानं प्रमादस्तमसो गुणः ॥ ३२ ॥
सत्त्वाधिकः सुखं ज्ञानं कर्मसंगं रजोऽधिकः ॥
तमोऽधिकश्च लभते निद्रालस्यं सुखेतरत् ॥ ३३ ॥
एषु त्रिषु प्रवृद्धेषु मुक्तिसंसृतिदुर्गतीः ॥
प्रयान्ति मानवा राजंस्तस्मात्सत्त्वयुतो भव ॥ ३४ ॥
ततश्च सर्वभावेन भज त्वं मां नरेश्वर ॥
भक्त्या चाव्यभिचारिण्या सर्वत्रैव च संस्थितम् ॥ ३५ ॥
अग्नौ सूर्ये तथा सोमे यच्च तारासु संस्थितम् ॥
विदुषि ब्राह्मणे तेजो विद्धि तन्मामकं नृप ॥ ३६ ॥
अहमेवाखिलं विश्वं सृजामि विसृजामि च ॥
औषधीस्तेजसा सर्वा विश्वं चाप्याययाम्यहम् ॥ ३७ ॥
सर्वेन्द्रियाण्यधिष्ठाय जाठरं च धनंजयम् ॥
भुनज्मि चाखिलान्भोगान्पुण्यपापविवर्जितः ॥ ३८ ॥
अहं विष्णुश्च रुद्रश्च ब्रह्मा गौरी गणेश्वरः ॥
इन्द्राद्या लोकपालाश्च ममैवांशसमुद्भवाः ॥ ३९ ॥
येन येन हि रूपेण जनो मां पर्युपासते ॥

तथा तथा दर्शयामि तस्मै रूपं सुभक्तितः ॥ ४० ॥
इति क्षेत्रं तथा ज्ञाता ज्ञानं ज्ञेयं मयेरितम् ॥
अखिलं भूपते सम्यगुपपन्नाय पृच्छते ॥ ४१ ॥
इति श्रीमद्गणेशगीतासु० क्षेत्रज्ञातृज्ञेयविवेकयोगो नाम नवमोऽध्यायः॥ ९॥
श्रीगजाननउवाच॥दैव्यासुरी राक्षसी च प्रकृतिस्त्रिविधा नृणाम्
तासां फलानि चिन्हानि संक्षेपात्तेऽधुना ब्रुवे ॥ १ ॥
आद्या संसाधयेन्मुक्तिं द्वे परे वन्धनं नृप ॥
चिन्हं ब्रवीमि चाद्यायास्तन्मे निगदतः शृणु ॥ २॥
अपैशून्यं दयाऽक्रोधश्चापल्यं धृतिरार्जवम् ॥
तेजोऽभयमहिंसा च क्षमा शौचममानिता ॥ ३ ॥
इत्यादि चिन्हमाद्याया आसुर्याः शृणु सांप्रतम् ॥
अतिवादोऽभिमानश्च दर्पो ज्ञानं सकोपता ॥ ४ ॥
आसुर्या एवमाद्यानि चिन्हानि प्रकृतेर्नृप ॥
निष्ठुरत्वं मदो मोहोऽहंकारो गर्व एव च ॥ ५ ॥
द्वेषो हिंसाऽदया क्रोध औद्धत्यं दुर्विनीतता ॥
आभिचारिककर्तृत्वं क्रूरकर्मरतिस्तथा ॥ ६ ॥
अविश्वासः सतां वाक्येऽशुचित्वं कर्महीनता ॥
निन्दकत्वं च वेदानां भक्तानामसुरद्विषाम् ॥ ७ ॥
मुनिश्रोत्रियविप्राणां तथा स्मृतिपुराणयोः ॥
पाखण्डवाक्ये विश्वासः संगतिर्मलिनात्मनाम् ॥ ८ ॥
सदम्भकर्मकर्तृत्वं स्पृहा च परवस्तुषु ॥
अनेककामनावत्त्वं सर्वदाऽनृतभाषणम् ॥ ९ ॥
परोत्कर्षासहिष्णुत्वं परकृत्यपराहतिः ॥
इत्याद्या बहवश्चान्ये राक्षस्याः प्रकृतेर्गुणाः ॥ १० ॥
पृथिव्यां स्वर्गलोके च परिवृत्य वसन्ति ते ॥
मद्भक्तिरहिता लोका राक्षसीं प्रकृतिं श्रिताः ॥ ११ ॥

तामसीं ये श्रिता राजन्यान्ति ते रौरवं ध्रुवम् ॥
अनिर्वाच्यं च ते दुःखं भुञ्जते तत्र संस्थिताः ॥ १२ ॥
दैवान्निःसृत्य नरकाज्जायन्ते भुवि कुब्जकाः ॥
जात्यन्धाः पङ्गवो दीना हीनजातिषु ते नृप ॥ १३ ॥
पुनः पापसमाचारा मद्भक्ताः पतन्ति ते ॥
उत्पतन्ति हि मद्भक्ता यां कांचिद्योनिमाश्रिताः॥१४॥
लभन्ते स्वर्गतिं यज्ञैरन्यैर्धर्मैश्च भूमिप ॥
सुलभास्ताः सकामानां मयि भक्तिः सुदुर्लभा ॥ १५ ॥
विमूढा मोहजालेन बद्धाः स्वेन च कर्मणा ॥
अहं हन्ता अहं कर्त्ता अहं भोक्तेति वादिनः ॥ १६ ॥
अहमेवेश्वरः शास्ता अहं वेत्ता अहं सुखी ॥
एतादृशी मतिर्नृणामधः पातयतीह तान् ॥ १७ ॥
तस्मादेतत्समुत्सृज्य दैवीं प्रकृतिमाश्रय ॥
भक्तिं कुरु मदीयां त्वमनिशं दृढचेतसा ॥ १८ ॥
सापि भक्तिस्त्रिधा राजन्सात्त्विकी राजसीतरा ॥
यद्देवान्भजते भक्त्या सात्त्विकी सा मता शुभा ॥१९॥
राजसी सा तु विज्ञेया भक्तिर्जन्ममृतिप्रदा ॥
यद्यक्षांश्चैव रक्षांसि यजन्ते सर्वभावतः ॥ २० ॥
वेदेनाविहितं क्रूरं साहंकारं सदम्भकम् ॥
भजन्ते प्रेतभूतादीन्कर्म कुर्वन्ति कामुकम् ॥ २१ ॥
शोषयन्तो निजं देहमन्तःस्थं मां दृढाग्रहाः ॥
तामस्येतादृशी भक्तिर्नृणां सा निरयप्रदा ॥ २२ ॥
कामो लोभस्तथा क्रोधो दंभश्चत्वार इत्यमी ॥
महाद्वाराणि वीचीनां तस्मादेतांस्तु वर्जयेत् ॥ २३ ॥
इति श्रीमद्गणेशगीतासु० उपदेशयोगो नाम दशमोऽध्यायः ॥ १० ॥
श्रीगजानन उवाच॥ तपोऽपि त्रिविधं राजन्कायिकादिप्रभेदतः॥

ऋजुतार्जवशौचानि ब्रह्मचर्यमहिंसनम् ॥ १ ॥
गुरुविज्ञद्विजातीनां पूजनं चासुरद्विषाम् ॥
स्वधर्मपालनं नित्यं कायिकं तप ईदृशम् ॥ २ ॥
मर्मास्पृक्च प्रियं वाक्यमनुद्वेगं हितं ऋतम् ॥
अधीतिर्वेदशास्त्राणां वाचिकं तप ईदृशम् ॥ ३ ॥
अन्तःप्रसादः शान्तत्वं मौनमिन्द्रियनिग्रहः ॥
निर्मलाशयता नित्यं मानसं तप ईदृशम् ॥ ४ ॥
अकामतः श्रद्धया च यत्तपः सात्त्विकं च तत् ॥
ऋध्यै सत्कारपूजार्थं सदम्भं राजसं तपः ॥ ५ ॥
तदस्थिरं जन्ममृती प्रयच्छति न संशयः ॥
परात्मपीडकं यच्च तपस्तामसमुच्यते ॥ ६ ॥
विधिवाक्यप्रमाणार्थं सत्पात्रे देशकालतः ॥
श्रद्धया दीयमानं यद्दानं तत्सात्त्विकं मतम् ॥ ७ ॥
उपकारं फलं वापि काङ्क्षद्भिर्दीयते नरैः ॥
क्लेशतो दीयमानं वा भक्त्या राजसमुच्यते ॥ ८ ॥
अकालदेशतोऽपात्रेऽवज्ञया दीयते तु यत् ॥
असत्काराच्च यद्दत्तं तद्दानं तामसं स्मृतम् ॥ ९ ॥
ज्ञानं च त्रिविधं राजन् शृणुष्व स्थिरचेतसा ॥
त्रिधा कर्म च कर्त्तारं ब्रवीमि ते प्रसंगतः ॥ १० ॥
नानाविधेषु भूतेषु मामेकं वीक्षते तु यः ॥
नाशवत्सु च नित्यं मां तज्ज्ञानं सात्त्विकं नृप ॥ ११ ॥
तेषु वेत्ति पृथग्भूतं विविधं भावमाश्रितः ॥
मामन्ययं च तज्ज्ञानं राजसं परिकीर्तितम् ॥ १२ ॥
हेतुहीनमसत्यं च देहात्मविषयं च यत् ॥
असदल्पार्थविषयं तामसं ज्ञानमुच्यते ॥ १३ ॥
भेदतास्त्रिविधं कर्म विद्धि राजन्मयेरितम् ॥

कामनाद्वेषदम्भैर्यद्रहितं नित्यकर्म यत् ॥ १४ ॥
कृतं विना फलेच्छां यत्कर्म सात्त्विकमुच्यते ॥
यद्बहुक्लेशतः कर्म कृतं यच्च फलेच्छया ॥ १५ ॥
क्रियमाणं नृभिर्दम्भात्कर्म राजसमुच्यते ॥
अनपेक्ष्य स्वशक्तिं यदर्थक्षयकरं च यत् ॥ १६ ॥
अज्ञानात्क्रियमाणं यत्कर्म तामसमीरितम् ॥
कर्तारं त्रिविधं विद्धि कथ्यमानं मया नृप ॥ १७ ॥
धैर्योत्साही समोऽसिद्धौ सिद्धौ चाविक्रियस्तु यः ॥
अहंकारविमुक्तो यः स कर्ता सात्त्विको नृप ॥ १८ ॥
कुर्वन्हर्षं च शोकं च हिंसां फलस्पृहां च यः ॥
अशुचिर्लुब्धको यश्च राजसोऽसौ निगद्यते ॥ १९ ॥
प्रमादाज्ञानसहितः परोच्छेदपरः शठः ॥
अलसस्तर्कवान्यस्तु कर्तासौ तामसो मतः ॥ २० ॥
सुखं च त्रिविधं राजन्दुःखं च क्रमतः शृणु ॥
सात्त्विकं राजसं चैव तामसं च मयोच्यते ॥ २१ ॥
विषवद्भासते पूर्वं दुःखस्यान्तकरं च यत् ॥
इष्यमानं तथाऽऽवृत्त्या यदन्तेऽमृतवद्भवेत् ॥ २२ ॥
प्रसादात्स्वस्य बुद्धेर्यत्सात्त्विकं सुखमीरितम् ॥
विषयाणां तु यो भोगो भासतेऽमृतवत्पुरा ॥ २३ ॥
हालाहलमिवान्ते यद्राजसं सुखमीरितम् ॥
तन्द्रिप्रमादसंभूतमालस्यप्रभवं च यत् ॥ २४ ॥
सर्वदा मोहकं स्वस्य सुखं तामसमीदृशम् ॥
न तदस्ति यदेतैर्यन्मुक्तं स्यात्त्रिविधैर्गुणैः ॥ २५ ॥
राजन्ब्रह्मापि त्रिविधमोंतत्सदिति भेदतः ॥
त्रिलोकेषु त्रिधा भूतमखिलं भूप वर्तते ॥ २६ ॥
ब्रह्मक्षत्रियविट्शूद्राः स्वभावाद्भिन्नकर्मिणः ॥

तानि तेषां तु कर्माणि संक्षेपात्तेऽधुना वदे ॥ २७
अन्तर्बाह्येन्द्रियाणां च वश्यत्वमार्जवं क्षमा ॥
नानातपांसि शौचं च द्विविधं ज्ञानमात्मनः ॥२८॥
वेदशास्त्रपुराणानां स्मृतीनां ज्ञानमेव च ॥
अनुष्ठानं तदर्थानां कर्म ब्राह्ममुदाहृतम् ॥ २९ ॥
दार्ढ्यं शौर्यं च दाक्ष्यं च युद्धे पृष्ठाप्रदर्शनम् ॥
शरण्यपालनं दानं धृतिस्तेजः स्वभावजम् ॥ ३० ॥
प्रभुता मनऔन्नत्यं सुनीतिर्लोकपालनम् ॥
पञ्चकर्माधिकारित्वं क्षात्रं कर्म समीरितम् ॥ ३१ ॥
नानावस्तुक्रयो भूमेः कर्षणं रक्षणं गवाम् ॥
त्रिधा कर्माधिकारित्वं वैश्यकर्म समीरितम् ॥ ३२
दानं द्विजानां शुश्रूषा सर्वदा शिवसेवनम् ॥
एतादृशं नरव्याघ्र कर्म शौद्रमुदीरितम् ॥ ३३ ॥
स्वस्वकर्मरता एते मय्यर्प्याखिलकारिणः ॥
मत्प्रसादात्स्थिरं स्थानं यान्ति ते परमं नृप ॥ ३४
इति ते कथितो राजन्प्रसादाद्योग उत्तमः ॥
सांगोपांगः सविस्तारोऽनादिसिद्धो मया प्रिय ॥ ३५
युङ्क्ष्व योगं मयाख्यातं नाख्यातं कस्यचिन्नृप ॥
गोपयैनं ततः सिद्धिं परां यास्यस्यनुत्तमाम् ॥ ३६
व्यास उवाच ॥ इति तस्य वचः श्रुत्वा प्रसन्नस्य महात्मनः
गणेशस्य वरेण्यः स चकार च यथोदितम् ॥ ३७ ॥
त्यक्त्वा राज्यं कुटुम्बं च कान्तारं प्रययौ रयात् ॥
उपदिष्टं यथा योगमास्थाय मुक्तिमाप्तवान् ॥ ३८
इमं गोप्यतमं योगं शृणोति श्रद्धया तु यः ॥
सोऽपि कैवल्यमाप्नोति यथा योगी तथैव सः ॥ ३९
य इमं श्रावयेद्योगं कृत्वा स्वार्थं सुबुद्धिमान् ॥

यथा योगी तथा सोऽपि परं निर्वाणमृच्छति ॥ ४० ॥
यो गीतां सम्यगभ्यस्य ज्ञात्वा चार्थं गुरोर्मुखात् ॥
कृत्वा पूजां गणेशस्य प्रत्यहं पठते तु यः ॥ ४१ ॥
एककालं द्विकालं वा त्रिकालं वापि यः पठेत् ॥
ब्रह्मीभूतस्य तस्यापि दर्शनान्मुच्यते नरः ॥ ४२ ॥
न यज्ञैर्न व्रतैर्दानैर्नाग्निहोत्रैर्महाधनैः ॥
न वेदैः सम्यगभ्यस्तैः सम्यग्ज्ञातैः सहाङ्गकैः ॥ ४३ ॥
पुराणश्रवणैर्नैव न शास्त्रैः साधुचिन्तितैः ॥
प्राप्यते ब्रह्म परममनया प्राप्यते नरैः ॥ ४४ ॥
ब्रह्मघ्नो मद्यपः स्तेयी गुरुतल्पगमोऽपि यः ॥
चतुर्णां यस्तु संसर्गी महापातककारिणाम् ॥ ४५ ॥
स्त्रीहिंसागोवधादीनां कर्त्तारो ये च पापिनः ॥
ते सर्वे प्रतिमुच्यन्ते गीतामेतां पठन्ति चेत् ॥ ४६ ॥
यः पठेत्प्रयतो नित्यं स गणेशो न संशयः ॥
चतुर्थ्यां यः पठेद्भक्त्या सोऽपि मोक्षाय कल्पते ॥४७॥
तत्तत्क्षेत्रं समासाद्य स्नात्वाभ्यर्च्य गजाननम् ॥
सकृद्गीतां पठन्भक्त्या ब्रह्मभूयाय कल्पते ॥ ४८ ॥
भाद्रे मासे सिते पक्षे चतुर्थ्यां भक्तिमान्नरः ॥
कृत्वा महीमयीं मूर्तिं गणेशस्य चतुर्भुजाम् ॥ ४९ ॥
सवाहनां सायुधां च समभ्यर्च्य यथाविधि ॥
यः पठेत्सप्तकृत्वस्तु गीतामेतां प्रयत्नतः ॥ ५० ॥
ददाति तस्य संतुष्टो गणेशो भोगमुत्तमम् ॥
पुत्रान्पौत्रान्धनं धान्यं पशुरत्नादिसंपदः ॥ ५१ ॥
विद्यार्थिनो भवेद्विद्या सुखार्थी सुखमाप्नुयात् ॥
कामानन्यॉंल्लभेत्कामी मुक्तिमन्ते प्रयान्ति ते ॥ ५२ ॥

इति श्रीमद्गणेशगीतासु० त्रिविधवस्तुविवेकनिरूपणं नामैकादशोऽध्यायः॥ ११

त उवाच ॥ अथातः संप्रवक्ष्यामि शुद्धं कैवल्यमुक्तिदम् ॥
अनुग्रहान्महेशस्य भवदुःखस्य भेषजम् ॥ १ ॥
न कर्मणामनुष्ठानैर्न दानैस्तपसापि वा ॥
कैवल्यं लभते मर्त्यः किंतु ज्ञानेन केवलम् ॥ २ ॥
रामाय दण्डकारण्ये पार्वतीपतिना पुरा ॥
या प्रोक्ता शिवगीताख्या गुह्याद्गुह्यतमा हि सा ॥ ३ ॥
यस्याः श्रवणमात्रेण नृणां मुक्तिर्ध्रुवं भवेत् ॥
पुरा सनत्कुमाराय स्कन्देनाभिहिता हि सा ॥ ४ ॥
सनत्कुमारः प्रोवाच व्यासाय मुनिसत्तमाः ॥
मह्यं कृपातिरेकेण प्रददौ बादरायणः ॥ ५ ॥
उक्तं च तेन कस्मैचिन्न दातव्यमिदं त्वया ॥
सूतपुत्रान्यथा देवाः क्षुभ्यन्ति च शपन्ति च ॥ ६ ॥
अथ पृष्टो मया विप्रा भगवान्बादरायणः ॥
भगवन्देवताः सर्वाः किं क्षुभ्यन्ति शपन्ति च ॥ ७ ॥
तासामत्रास्ति का हानिर्यया कुप्यन्ति देवताः ॥
पाराशर्योऽथ मामाह यत्पृष्टं शृणु वत्स तत् ॥ ८ ॥
नित्याग्निहोत्रिणो विप्राः संति ये गृहमेधिनः ॥
त एव सर्वफलदाः सुराणां कामधेनवः ॥ ९ ॥
भक्ष्यं भोज्यं च पेयं च यद्यदिष्टं सुपर्वणाम् ॥
अग्नौ हुतेन हविषा सत्सर्वं लभ्यते दिवि ॥ १० ॥
नान्यदस्ति सुरेशानामिष्टसिद्धिप्रदं दिवि ॥
दोग्ध्री धेनुर्यथा नीता दुःखदा गृहमेधिनाम् ॥ ११ ॥
तथैव ज्ञानवान्विप्रो देवानां दुःखदो भवेत् ॥
त्रिदशास्तेन विघ्नन्ति प्रविष्टा विषयं नृणाम् ॥ १२ ॥
ततो न जायते भक्तिः शिवे कस्यापि देहिनः ॥
तस्मादविदुषां नैव जायते शूलपाणिनः ॥ १३ ॥

यथाकथंचिज्जातापि मध्ये विच्छिद्यते नृणाम् ॥
जातं वापि शिवज्ञानं न विश्वासं भजत्यलम् ॥ १४
ऋषय ऊचुः ॥ यद्येवं देवता विघ्नमाचरान्ति तनूभृताम् ॥
पौरुषं तत्र कस्यास्ति येन मुक्तिर्भविष्याति ॥ १५ ॥
सत्यं सूतात्मज ब्रूहि तत्रोपायोऽस्ति वा न वा ॥
सूत उवाच ॥ कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते १६
इष्टापूर्तादिकर्माणि तेनाचराति मानवः ॥
शिवार्पणाधिया कामान्परित्यज्य यथाविधि ॥ १७ ॥
अनुग्रहात्तेन शंभोर्जायते सुदृढो नरः ॥
ततो भीताः पलायन्ते विघ्नं हित्वा सुरेश्वराः ॥ १८ ॥
जायते तेन शुश्रूषा चरिते चन्द्रमौलिनः ॥
शृण्वतो जायते ज्ञानं ज्ञानादेव विमुच्यते ॥ १९ ॥
वहुनात्र किमुक्तेन यस्य भक्तिः शिवे दृढा ॥
महापापोपपापौघकोटिग्रस्तोऽपि मुच्यते ॥ २० ॥
अनादरेण शाठ्येन परिहासेन मायया ॥
शिवभक्तिरतश्चेत्स्यादन्त्यजोऽपि विमुच्यते ॥ २१ ॥
एवं भक्तिश्च सर्वेषां सर्वदा सर्वतोमुखी ॥
तस्यां तु विद्यमानायां यस्तु मर्त्यो न मुच्यते ॥ २२ ॥
संसारवन्धनात्तस्मादन्यः को वास्ति मूढधीः ॥
नियमाद्यस्तु कुर्वीत भक्तिं वा द्रोहमेव वा ॥ २३ ॥
तस्यापि चेत्प्रसन्नोऽसौ फलं यच्छति वाञ्छितम् ॥
ऋद्धं किंचित्समादाय क्षुल्लकं जलमेव वा ॥ २४ ॥
यो दत्ते नियमेनासौ तस्मै दत्ते जगत्त्रयम् ॥
तत्राप्यशक्तो नियमान्नमस्कारं प्रदक्षिणाम् ॥ २५ ॥
यः करोति महेशस्य तस्मै तुष्टो भवेच्छिवः ॥
प्रदक्षिणास्वशक्तोऽपि यः स्वांते चिन्तयेच्छिवम् ॥ २६ ॥

गच्छन्समुपविष्टो वा तस्याभीष्टं प्रयच्छति ॥
चन्दनं बिल्वकाष्ठस्य पुष्पाणि वनजान्यपि ॥ २७ ॥
फलानि तादृशान्येव यस्य प्रीतिकराणि वै ॥
दुष्करं तस्य सेवायां किमास्ति भुवनत्रये ॥ २८ ॥
वन्येषु यादृशी प्रीतिर्वर्तते परमेशितुः ॥
उत्तमेष्वपि नास्त्येव तादृशी ग्रामजेष्वपि ॥ २९ ॥
तं त्यक्त्वा तादृशं देवं यः सेवेतान्यदेवताम् ॥
स हि भागीरथीं त्यक्त्वा काङ्क्षते मृगतृष्णिकाम् ॥३०॥
किंतु यस्यास्ति दुरितं कोटिजन्मसु संचितम् ॥
तस्य प्रकाशते नायमर्थो मोहान्धचेतसः ॥ ३१ ॥
न कालनियमो यत्र न देशस्य स्थलस्य च ॥
यत्रास्य चित्तं रमते तस्य ध्यानेन केवलम् ॥ ३२ ॥
आत्मत्वेन शिवस्यासौ शिवसायुज्यमाप्नुयात् ॥
अतिस्वल्पतरायुः श्रीभूतेशांशाधिपोऽपि यः ॥ ३३ ॥
स तु राजाहमस्मीति वादिनं हन्ति सान्वयम् ॥
कर्तापि सर्वलोकानामक्षयैश्वर्यवानपि ॥ ३४ ॥
शिवः शिवोऽहमस्मीति वादिनं यं च कश्चन ॥
आत्मना सह तादात्म्यभागिनं कुरुते भृशम् ॥ ३५ ॥
धर्मार्थकाममोक्षाणां पारं यस्याथ येन वै ॥
मुनयस्तत्प्रवक्ष्यामि व्रतं पाशुपताभिधम् ॥ ३६ ॥
कृत्वा तु विरजां दीक्षां भूतिरुद्राक्षधारिणः ॥
जपन्तो वेदसाराख्यं शिवनामसहस्रकम् ॥ ३७ ॥
संत्यज्य तेन मर्त्यत्वं शैवीं तनुमवाप्स्यथ ॥
ततः प्रसन्नो भगवाञ्छंकरो लोकशंकरः ॥ ३८ ॥
भवतां दृश्यतामेत्य कैवल्यं वः प्रदास्यति ॥
रामाय दण्डकारण्ये यत्प्रादात्कुम्भसंभवः ॥ ३९ ॥

तत्सर्वं वः प्रवक्ष्यामि शृणुध्वं भक्तियोगिनः ॥ ४० ॥

इति श्रीपद्मपुराणे उपरिभागे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे शिवभक्त्युत्कर्षनिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥

---

ऋषय ऊचुः ॥ किमर्थमागतोऽगस्त्यो रामचन्द्रस्य सन्निधिम् ॥
कथं वा विरजां दीक्षां कारयामास राघवम् ॥
ततः किमाप्तवान् रामः फलं तद्वक्तुमर्हसि ॥ १ ॥
सूत उवाच ॥ रावणेन यदा सीताऽपहृता जनकात्मजा ॥
तदा वियोगदुःखेन विलपन्नास राघवः ॥ २ ॥
निर्निद्रो निरहंकारो निराहारो दिवानिशम् ॥
मोक्तुमैच्छत्ततः प्राणान्सानुजो रघुनन्दनः ॥ ३ ॥
लोपामुद्रापतिर्ज्ञात्वा तस्य सन्निधिमागमत् ॥
अथ तं बोधयामास संसारासारतां मुनिः ॥ ४ ॥
अगस्त्य उवाच । किं विषीदसि राजेन्द्र कान्ता कस्य विचार्यताम् ॥
जडः किं नु विजानाति देहोऽयं पाञ्चभौतिकः ॥ ५ ॥
निर्लेपः परिपूर्णश्च सच्चिदानन्दविग्रहः ॥
आत्मा न जायते नैव म्रियते न च दुःखभाक् ॥ ६ ॥
सूर्योऽसौ सर्वलोकस्य चक्षुष्ट्वेन व्यवस्थितः ॥
तथापि चाक्षुषैर्दोषैर्न कदाचिद्विलिप्यते ॥ ७ ॥
सर्वभूतान्तरात्मापि तद्वद्दृश्यैर्न लिप्यते ॥
देहोऽपि मलपिण्डोऽयं मुक्तजीवो जडात्मकः ॥ ८ ॥
दह्यते वह्निना काष्ठैः शिवाद्यैर्भक्ष्यतेऽपि वा ॥
तथापि नैव जानाति विरहे तस्य का व्यथा ॥ ९ ॥
सुवर्णगौरी दूर्वाया दलवच्छ्यामलापि वा ॥
पीनोत्तुङ्गस्तनाभोगभुग्नसूक्ष्मवलग्निका ॥ १० ॥
बृहन्नितम्बजघना रक्तपादसरोरुहा ॥
राकाचन्द्रमुखी बिम्बप्रतिबिम्बरदच्छदा ॥ ११ ॥

नीलेन्दीवरनीकाशनयनद्वयशोभिता ॥
मत्तकोकिलसँल्लापा मत्तद्विरदगामिनी ॥ १२ ॥
कटाक्षैरनुगृह्णाति मां पञ्चेषुशरोत्तमैः ॥
इति यां मन्यते मूढ स तु पञ्चेषुशासितः ॥ १३ ॥
तस्याविवेकं वक्ष्यामि श्रृणुष्वावहितो नृप ॥
न च स्त्री न पुमानेष नैव चायं नपुंसकः ॥ १४ ॥
अमूर्तः पुरुषः पूर्णो द्रष्टा देही स जीविनः ॥
या तन्वङ्गी मृदुर्बाला मलपिण्डात्मिका जडा ॥ १५ ॥
सा न पश्यति यत्किंचिन्न श्रृणोति न जिघ्रति ॥
चर्ममात्रा तनुस्तस्या बुद्ध्वा त्यक्षस्व राघव ॥ १६ ॥
या प्राणादधिका सैव हंत ते स्याद्घृणास्पदम् ॥
जायन्ते यदि भूतेभ्यो देहिनः पाञ्चभौतिकाः ॥ १७ ॥
आत्मा यदेकलस्तेषु परिपूर्णः सनातनः ॥
का कान्ता तत्र कः कान्तः सर्व एव सहोदराः ॥१
निर्मितायां गृहावल्यां तदवच्छिन्नतां गतम् ॥
नभस्तस्यां तु दग्धायां न कांचित्क्षतिमृच्छति ॥ १९ ॥
तद्वदात्मापि देहेषु परिपूर्णः सनातनः ॥
हन्यमानेषु तेष्वेव स स्वयं नैव हन्यते ॥ २० ॥
हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ॥
तावुभौ न विजानीतो नायं हन्ति न हन्यते ॥ २१ ॥
अस्मान्नृपातिदुःखेन किं खेदस्यास्ति कारणम् ॥
स्वस्वरूपं विदित्वेदं दुःखं त्यक्त्वा सुखी भव ॥ २२ ॥
राम उवाच ॥ मुने देहस्य नो दुःखं नैव चेत्परमात्मनः ॥
सीतावियोगदुःखाग्निर्मां भस्मीकुरुते कथम् ॥ २३ ॥
सदाऽनुभूयते योऽर्थः स नास्तीति त्वयेरितः ॥
जायतां तत्र विश्वासः कथं मे मुनिपुङ्गव ॥ २४ ॥

अन्योऽत्र नास्ति को भोक्ता येन जन्तुः प्रतप्यते ॥
सुखस्य वापि दुःखस्य तद्ब्रूहि मुनिसत्तम ॥ २५ ॥
अगस्त्य उवाच ॥ दुर्ज्ञेया शांभवी माया तया संमोह्यते जगत् ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ २६ ॥
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥
सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः ॥ २७ ॥
तस्यैवांशो जीवलोके हृदये प्राणिनां स्थितः ॥
विस्फुलिङ्गा यथा वह्नेर्जायन्ते काष्ठयोगतः ॥ २८ ॥
अनादिकर्मसंबद्धास्तद्वदंशा महेशितुः ॥
अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः ॥ २९ ॥
मनो बुद्धिरहंकारश्चित्तं चेति चतुष्टयम् ॥
अन्तःकरणमित्याहुस्तत्र ते प्रतिबिम्बिताः ॥ ३० ॥
जीवत्वं प्राप्नुयुः कर्मफलभोक्तार एव ते ॥
ततो वैषयिकं तेषां सुखं वा दुःखमेव वा ॥ ३१ ॥
त एव भुञ्जते भोगायतनेऽस्मिन् शरीरके ॥
स्थावरं जङ्गमं चेति द्विविधं वपुरुच्यते ॥ ३२ ॥
स्थावरास्तत्र देहाः स्युः सूक्ष्मा गुल्मलतादयः ॥
अण्डजाः स्वेदजास्तद्वदुद्भिज्जा इति जङ्गमाः ॥ ३३ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ॥
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ३४ ॥
सुख्यहं दुःख्यहं चेति जीव एवाभिमन्यते ॥
निर्लेपोऽपि परं ज्योतिर्मोहितः शंभुमायया ॥ ३५ ॥
कामः क्रोधस्तथा लोभो मदो मात्सर्यमेव च ॥
मोहश्चेत्यरिषड्वर्गमहंकारगतं विदुः ॥ ३६ ॥
स एव बध्यते जीवः स्वप्नजाग्रदवस्थयोः ॥
सुषुप्तौ तदभावाच्च जीवः शंकरतां गतः ॥ ३७ ॥

स एव मायासंस्पृष्टः कारणं सुखदुःखयोः ॥
शुक्तौ रजतवद्विश्वं मायया दृश्यते शिवे ॥ ३८ ॥
ततो विवेकज्ञानेन न कोऽप्यत्रास्ति दुःखभाक् ॥
ततो विरम दुःखात्त्वं किं मुधा परितप्यसे ॥ ३९ ॥
श्रीराम उवाच ॥ मुने सर्वमिदं तथ्यं यन्मदग्रे त्वयेरितम् ॥
तथापि न जहात्येतत्प्रारब्धादृष्टमुल्बणम् ॥ ४० ॥
मत्तं कुर्याद्यथा मद्यं नष्टाविद्यमपि द्विजम् ॥
तद्वत्प्रारब्धभोगोऽपि न जहाति विवेकिनम् ॥ ४१ ॥
ततः किं बहुनोक्तेन प्रारब्धसचिवः स्मरः ॥
बाधते मां दिवारात्रमहंकारोऽपि तादृशः ॥ ४२ ॥
अत्यन्तपीडितो जीवः स्थूलदेहं विमुञ्चति ॥
तस्माज्जीवाप्तये मह्यमुपायः क्रियतां द्विज ॥ ४३ ॥

इति श्रीशिवगीतासु० वैराग्योपदेशो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

अगस्त्य उवाच ॥ न गृह्णाति वचः पथ्यं कामक्रोधादिपीडितः ॥
हितं न रोचते तस्य मुमूर्षोरिव भेषजम् ॥ १ ॥
मध्येसमुद्रं या नीता सीता दैत्येन मायिना ॥
आयास्यति नरश्रेष्ठ सा कथं तव संनिधिम् ॥ २ ॥
बध्यन्ते देवताः सर्वा द्वारि मर्कटयूथवत् ॥
किं च चामरधारिण्यो यस्य संति सुराङ्गनाः ॥ ३ ॥
भुङ्क्ते त्रिलोकीमखिलां यः शंभुवरदर्पितः ॥
निष्कण्टकं तस्य जयः कथं तव भविष्यति ॥ ४ ॥
इन्द्रजिन्नाम पुत्रो यस्तस्यास्तीशवरोद्धतः ॥
तस्याग्रे संगरे देवा बहुवारं पलायिताः ॥ ५ ॥
कुम्भकर्णाह्वयो भ्राता यस्यास्ति सुरसूदनः ॥
अन्यो दिव्यास्त्रसंयुक्तश्चिरजीवी बिभीषणः ॥ ६ ॥

दुर्गं यस्यास्ति लंकाख्यं दुर्जेयं देवदानवैः ॥
चतुरङ्गबलं यस्य वर्तते कोटिसंख्यया ॥ ७ ॥
एकाकिना त्वया जेयः स कथं नृपनन्दन ॥
आकांक्षते करे धर्तुं बालश्चन्द्रमसं यथा ॥
तथा त्वं काममोहेन जयं तस्याभिवाञ्छसि ॥ ८ ॥
श्रीराम उवाच ॥ क्षत्रियोऽहं मुनिश्रेष्ठ भार्या मे रक्षसा हृता ॥
यदि तं न निहन्म्याशु जीवने मेऽस्ति किं फलम् ॥ ९ ॥
अतस्ते तत्त्वबोधेन न मे किंचित्प्रयोजनम् ॥
कामक्रोधादयः सर्वे दहन्त्येते तनुं मम ॥ १० ॥
अहंकारोऽपि मे नित्यं जीवनं हन्तुमुद्यतः ॥
हृतायां निजकान्तायां शत्रुणाऽवमतस्य वा ॥ ११ ॥
यस्य तत्त्वबुभुत्सा स्यात्स लोके पुरुषाधमः ॥
तस्मात्तस्य वधोपायं लङ्घयित्वाम्बुधिं रणे ॥
ब्रूहि मे मुनिशार्दूल त्वत्तो नान्योऽस्ति मे गुरुः ॥१२॥
अगस्त्य उवाच॥ एवं चेच्छरणं याहि पार्वतीपतिमव्ययम् ॥
स चेत्प्रसन्नो भगवान्वाञ्छितार्थं प्रदास्यति ॥१३॥
देवैरजेयः शक्राद्यैर्हरिणा ब्रह्मणापि वा ॥
स ते वध्यः कथं वा स्याच्छंकरानुग्रहं विना ॥१४॥
अतस्त्वां दीक्षयिष्यामि विरजामार्गमाश्रितः ॥
तेन मार्गेन मर्त्यत्वं हित्वा तेजोमयो भव ॥ १५ ॥
येन हत्वा रणे शत्रून्सर्वान्कामानवाप्स्यसि ॥
भुक्त्वा भूमण्डले चान्ते शिवसायुज्यमाप्स्यसि ॥१६॥
सूत उवाच ॥ अथ प्रणम्य रामस्तं दण्डवन्मुनिसत्तमम् ॥
उवाच दुःखनिर्मुक्तः प्रहृष्टेनान्तरात्मना ॥ १७ ॥
श्रीराम उवाच॥ कृतार्थोऽहं मुने जातो वाञ्छितार्थो ममागतः
पीताम्बुधिः प्रसन्नस्त्वं यदि मे किमु दुर्लभम् ॥

अतस्त्वं विरजां दीक्षां ब्रूहि मे मुनिसत्तम ॥ १८ ॥
अगस्त्य उवाच ॥ शुक्लपक्षे चतुर्दश्यामष्टम्यां वा विशेषतः ॥
एकादश्यां सोमवारे आर्द्रायां वा समारभेत् ॥ १९ ॥
यं वायुमाहुर्यं रुद्रं यमग्निं परमेश्वरम् ॥
परात्परतरं चाहुः परात्परतरं शिवम् ॥ २० ॥
ब्रह्मणो जनकं विष्णोर्वह्नेर्वायोः सदाशिवम् ॥
ध्यात्वाग्निनाऽवसथ्याग्निं विशोध्य च पृथक्पृथक्॥२१॥
पञ्चभूतानि संयम्य ध्यात्वा गुणविधिक्रमात् ॥
मात्राः पञ्च चतस्रश्च त्रिमात्रादिस्ततः परम् ॥ २२ ॥
एकमात्रममात्रं हि द्वादशान्तं व्यवस्थितम् ॥
स्थित्यां स्थाप्यामृतो भूत्वा व्रतं पाशुपतं चरेत् ॥२३॥
इदं व्रतं पाशुपतं करिष्यामि समासतः ॥
प्रातरेवं तु संकल्प्य निधायाग्निं स्वशाखया ॥ २४ ॥
उपोषितः शुचिः स्नातः शुक्लाम्बरधरः स्वयम् ॥
शुक्लयज्ञोपवीतश्च शुक्लमाल्यानुलेपनः ॥ २५ ॥
जुहुयाद्विरजामंत्रैः प्राणापानादिभिस्ततः ॥
अनुवाकान्तमेकाग्रः समिदाज्यचरून्पृथक् ॥ २६ ॥
आत्मन्यग्निं समारोप्य याते अग्नेति मंत्रतः ॥
भस्मादायाग्निरित्याद्यैर्विमृज्याङ्गानि संस्पृशेत् ॥ २७ ॥
भस्मच्छन्नो भवेद्विद्वान्महापातकसंभवैः ॥
पापैर्विमुच्यते सत्यं मुच्यते च न संशयः ॥ २८ ॥
वीर्यमग्नेर्यतो भस्म वीर्यवान्भस्मसंयुतः ॥
भस्मस्नानरतो विप्रो भस्मशायी जितेन्द्रियः ॥ २९ ॥
सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् ॥
एवं कुरु महाभाग शिवनामसहस्रकम् ॥ ३० ॥
इदं तु संप्रदास्यामि तेन सर्वार्थमाप्स्यसि ॥

सुत उवाच ॥ इत्युक्त्वा प्रददौ तस्मै शिवनामसहस्रकम् ॥ ३१
वेदसाराभिधं नित्यं शिवप्रत्यक्षकारकम् ॥
उक्तं च तेन राम त्वं जप नित्यं दिवानिशम् ॥ ३२
ततः प्रसन्नो भगवान्महापाशुपतास्त्रकम् ॥
तुभ्यं दास्यति तेन त्वं शत्रून्हत्वाऽऽप्स्यसि प्रियाम् ॥ ३३
तस्यैवास्त्रस्य माहात्म्यात्समुद्रं शोषयिष्यसि ॥
संहारकाले जगतामस्त्रं तत्पार्वतीपतेः ॥ ३४ ॥
तदलाभे दानवानां जयस्तव सुदुर्लभः ॥
तस्माल्लब्धं तदेवास्त्रं शरणं याहि शंकरम् ॥ ३५ ॥

इति श्रीपद्मपुराणे शिवगीतासु० विरजादीक्षानिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

सूत उवाच ॥ एवमुक्त्वा मुनिश्रेष्ठ गते तस्मिन्निजाश्रमम् ।
अथ रामगिरौ रामस्तस्मिन्गोदावरीतटे ॥ १ ॥
शिवलिङ्गं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि ॥
भूतिभूषितसर्वाङ्गो रुद्राक्षाभरणैर्युतः ॥ २ ॥
अभिषिच्य जलैः पुण्यैर्गौतमीसिन्धुसंभवैः ॥
अर्चयित्वा वन्यपुष्पैस्तद्वद्वन्यफलैरपि ॥ ३ ॥
भस्मच्छन्नो भस्मशायी व्याघ्रचर्मासने स्थितः ॥
नाम्नां सहस्रं प्रजपन्नक्तंदिवमनन्यधीः ॥ ४ ॥
मासमेकं फलाहारो मासं पर्णाशनः स्थितः ॥
मासमेकं जलाहारो मासं च पवनाशनः ॥ ५ ॥
शान्तो दान्तः प्रसन्नात्मा ध्यायन्नेवं महेश्वरम् ॥
हृत्पङ्कजे समासीनमुमादेहार्धधारिणम् ॥ ६ ॥
चतुर्भुजं त्रिनयनं विद्युत्पिङ्गजटाधरम् ॥
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ॥ ७ ॥
सर्वाभरणसंयुक्तं नागयज्ञोपवीतिनम् ॥

व्याघ्रचर्माम्बरधरं वरदाभयधारिणम् ॥ ८ ॥
व्याघ्रचर्मोत्तरीयं च सुरासुरनमस्कृतम् ॥
पञ्चवक्त्रं चन्द्रमौलिं त्रिशूलडमरूधरम् ॥ ९ ॥
नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥
एवं नित्यं प्रजपतो गतं मासचतुष्टयम् ॥ १० ॥
अथ जातो महानादः प्रलयाम्बुदभीषणः ॥
समुद्रमथनोद्भूतमन्दरावनिभृद्ध्वनिः ॥ ११ ॥
रुद्रवाणाग्निसंदीप्तभ्रश्यत्त्रिपुरविभ्रमः ॥
तमाकर्ण्याथ संभ्रान्तो यावत्पश्यति पुष्करम् ॥ १२ ॥
तावदेव महातेजो समस्यासीत्पुरो द्विजाः ॥
तेजसा तेन संभ्रान्तो नापश्यत्स दिशो दश ॥ १३ ॥
अन्धीकृतेक्षणस्तूर्णं मोहं यातो नृपात्मजः ॥
विचिन्त्य तर्कयामास दैत्यमायां द्विजेश्वराः ॥ १४ ॥
अथोत्थाय महावीरः सज्जं कृत्वा स्वकं धनुः ॥
अविध्यान्निशितैर्बाणैर्दिव्यास्त्रैरभिमन्त्रितैः ॥ १५ ॥
आग्नेयं वारुणं सौम्यं मोहनं सौरपार्वतम् ॥
विष्णुचक्रं महाचक्रं कालचक्रं च वैष्णवम् ॥ १६ ॥
रौद्रं पाशुपतं ब्राह्मं कौबेरं कुलिशानिलम् ॥
भार्गवादिबहून्यस्त्राण्ययं प्रायुङ्क्त राघवः ॥ १७ ॥
तस्मिंस्तेजसि शस्त्राणि चास्त्राण्यस्य महीपतेः ॥
विलीनानि महाभ्रस्य करका इव नीरधौ ॥ १८ ॥
ततः क्षणेन जज्वाल धनुस्तस्य कराच्च्युतम् ॥
तूणीरं चाङ्गुलित्राणं गोधिकापि महीपते ॥ १९ ॥
तद्दृष्ट्वा लक्ष्मणो भीतः पपात भुवि मूर्च्छितः॥
अथाकिञ्चित्करो रामो जानुभ्यामवनिं गतः ॥ २० ॥
मीलिताक्षो भयाविष्टः शंकरं शरणं गतः ॥

स्वरेणाप्युच्चरन्नुच्चैः शंभोर्नामसहस्रकम् ॥ २१ ॥
शिवं च दण्डवद्भूमौ प्रणनाम पुनः पुनः ॥
पुनश्च पूर्ववच्चासीच्छब्दो दिङ्मण्डलं ग्रसन् ॥ २२ ॥
चचाल वसुधा घोरं पर्वताश्च चकम्पिरे ॥
ततः क्षणेन शीतांशुशीतलं तेज आपतत् ॥ २३ ॥
उन्मीलिताक्षो रामस्तु यावदेतत्प्रपश्यति ॥
तावद्ददर्श वृषभं सर्वालंकारसंयुतम् ॥ २४ ॥
पीयूषमथनोद्भूतनवनीतस्य पिण्डवत् ॥
प्रोतस्वर्णं मरकतच्छायश्रृङ्गद्वयान्वितम् ॥ २५ ॥
नीलरत्नेक्षणं ह्रस्वकण्ठकम्बलभूषितम् ॥
रत्नपल्याणसंयुक्तं निबद्धं श्वेतचामरैः ॥ २६ ॥
घण्टिकाघर्घरीशब्दैः पूरयन्तं दिशो दश ॥
तत्रासीनं महादेवं शुद्धस्फटिकविग्रहम् ॥ २७ ॥
कोटिसूर्यप्रतीकाशं कोटिशीतांशुशीतलम् ॥
व्याघ्रचर्माम्बरधरं नागयज्ञोपवीतिनम् ॥ २८ ॥
सर्वालंकारसंयुक्तं विद्युत्पिङ्गजटाधरम् ॥
नीलकण्ठं व्याघ्रचर्मोत्तरीयं चन्द्रशेखरम् ॥ २९ ॥
नानाविधायुधोद्भासिदशबाहुं त्रिलोचनम् ॥
युवानं पुरुषश्रेष्ठं सच्चिदानन्दविग्रहम् ॥ ३० ॥
तत्रैव च सुखासीनां पूर्णचन्द्रनिभाननाम् ॥
नीलेन्दीवरदामाभामुद्यन्मरकतप्रभाम् ॥ ३१ ॥
मुक्ताभरणसंयुक्तां रात्रिं ताराञ्चितामिव ॥
विन्ध्यक्षितिधरोत्तुङ्गकुचभारभरालसाम् ॥ ३२ ॥
सदसत्संशयाविष्टमध्यदेशान्तराम्बराम् ॥
दिव्याभरणसंयुक्तां दिव्यगन्धानुलेपनाम् ॥ ३३ ॥
दिव्यमाल्याम्बरधरां नीलेन्दीवरलोचनाम् ॥

अलकोद्भासिवदनां ताम्बूलग्रासशोभिताम् ॥ ३४ ॥
शिवालिङ्गनसंजातपुलकोद्भासिविग्रहाम् ॥
सच्चिदानन्दरूपाढ्यां जगन्मातरमम्बिकाम् ॥ ३५ ॥
सौन्दर्यसारसंदोहां ददर्श रघुनन्दनः ॥
स्वस्ववाहनसंयुक्तान्नानायुधलसत्करान् ॥ ३६ ॥
बृहद्रथन्तरादीनि सामानि परिगायतः॥
स्वस्वकान्तासमायुक्तान्दिक्पालान्परितः स्थितान्॥३७॥
अग्रगं गरुडारूढं शंखचक्रगदाधरम् ॥
कालाम्बुदप्रतीकाशं विद्युत्कान्त्या श्रिया युतम् ॥३८॥
जपन्तमेकमनसा रुद्राध्यायं जनार्दनम् ॥
पश्चाच्चतुर्मुखं देवं ब्रह्माणं हंसवाहनम् ॥ ३९ ॥
चतुर्वक्त्रैश्चतुर्वेदरुद्रसूक्तैर्महेश्वरम् ॥
स्तुवन्तं भारतीयुक्तं दीर्घकूर्चं जटाधरम् ॥ ४० ॥
अथर्वशिरसा देवं स्तुवन्तं मुनिमण्डलम् ॥
गङ्गादितटिनीयुक्तमम्बुधिं नीलविग्रहम् ॥ ४१ ॥
श्वेताश्वतरमंत्रेण स्तुवन्तं गिरिजापतिम् ॥
अनन्तादिमहानागान्कैलासगिरिसन्निभान् ॥ ४२ ॥
कैवल्योपनिषत्पाठान्मणिरत्नविभूषितान् ॥
सुवर्णवेत्रहस्ताढ्यं नन्दिनं पुरतः स्थितम् ॥ ४३ ॥
दक्षिणे मूषकारूढं गणेशं पर्वतोपमम् ॥
मयूरवाहनारूढमुत्तरे षण्मुखं तथा ॥ ४४ ॥
महाकालं च चण्डेशं पार्श्वयोर्भीषणाकृतिम् ॥
कालाग्निरुद्रं दूरस्थं ज्वलद्दावाग्निसन्निभम् ॥ ४५ ॥
त्रिपादं कुटिलाकारं नटद्भृङ्गिरिटिं पुरः ॥
नानाविकारवदनान्कोटिशः प्रमथाधिपान् ॥ ४६ ॥
नानावाहनसंयुक्तं परितो मातृमण्डलम् ॥

पञ्चाक्षरीजपासक्तान्सिद्धविद्याधरादिकान् ॥ ४७ ॥
दिव्यरुद्रकगीतानि गायत्किन्नरवृन्दकम् ॥
तत्र त्रैयम्बकं मन्त्रं जपद्द्विजकदम्बकम् ॥ ४८ ॥
गायन्तं वीणया गीतं नृत्यन्तं नारदं दिवि ॥
नृत्यतो नाट्यनृत्येन रम्भादीनप्सरोगणान् ॥ ४९ ॥
गायच्चित्ररथादीनां गन्धर्वाणां कदम्बकम् ॥
कम्बलाश्वतरौ शंभुकर्णभूषणतां गतौ ॥ ५० ॥
गायन्तौ पन्नगौ गीतं कपालं कम्बलं तथा ॥
एवं देवसभां दृष्ट्वा कृतार्थो रघुनन्दनः ॥ ५१ ॥
हर्षगद्गदया वाचा स्तुवन्देवं महेश्वरम् ॥
दिव्यनामसहस्रेण प्रणनाम पुनः पुनः ॥ ५२ ॥
इति श्रीपद्मपुराणे शिवगीतासु० शिवप्रादुर्भावाख्यश्चतुर्थोऽध्यायः ॥४॥

---

सूत उवाच ॥ अथ प्रादुरभूत्तत्र हिरण्मयरथो महान् ॥
अनेकदिव्यरत्नांशुकिर्मीरितदिगन्तरः ॥ १ ॥
नद्युपान्तिकपङ्काढ्यमहाचक्रचतुष्टयः ॥
मुक्तातोरणसंयुक्तः श्वेतच्छत्रशतावृतः ॥ २ ॥
शुद्धहेमखलीनाढ्यतुरङ्गगणसंयुतः ॥
मुक्तावितानविलसदूर्ध्वदिव्यवृषध्वजः ॥ ३ ॥
मत्तवारणिकायुक्तः पट्टतल्पोपशोभितः ॥
पारिजाततरूद्भूतपुष्पमालाभिरञ्चितः ॥ ४ ॥
मृगनाभिसमुद्भूतकस्तूरिमदपङ्किलः ॥
कर्पूरागरुधूपोत्थगन्धाकृष्टमधुव्रतः ॥ ५ ॥
संवर्तघनघोषाढ्यो नानावाद्यसमन्वितः ॥
वीणावेणुस्वनासक्तकिन्नरीगणसंकुलः ॥ ६ ॥
एवं दृष्ट्वा रथश्रेष्ठं वृषादुत्तीर्य शंकरः ॥

अम्बया सहितस्तत्र पट्टतल्पेऽविशत्तदा ॥ ७ ॥
नीराजनैः सुरस्त्रीणां श्वेतचामरचालनैः ॥
दिव्यव्यजनपातैश्च प्रहृष्टो नीललोहितः ॥ ८ ॥
क्वणत्कङ्कणनिध्वानैर्मञ्जुमञ्जीरसिञ्जितैः ॥
वीणावेणुस्वनैर्गीतैः पूर्णमासीज्जगत्त्रयम् ॥ ९ ॥
शुककेकिकुलारावैः श्वेतपारावतस्वनैः ॥
उन्निद्रभूषाफणिनां दर्शनादेव बर्हिणः ॥ १० ॥
ननृतुर्दर्शयन्तः स्वांश्चन्द्रकान्कोटिसंख्यया ॥
प्रणमन्तं ततो राममुत्थाप्य वृषभध्वजः ॥ ११ ॥
आनिनाय रथं दिव्यं प्रहृष्टेनान्तरात्मना ॥
कमण्डलुजलैः स्वच्छैः स्वयमाचम्य यत्नतः ॥ १२ ॥
समाचम्याथ पुरतः स्वांके राममुपानयत् ॥
अथ दिव्यं धनुस्तस्मै ददौ तूणीरमक्षयम् ॥ १३ ॥
महापाशुपतं नाम दिव्यमस्त्रं ददौ ततः ॥
उक्तश्च तेन रामोऽपि सादरं चन्द्रमौलिना ॥ १४ ॥
जगन्नाशकरं रौद्रमुग्रमस्त्रमिदं नृप ॥
अतो नेदं प्रयोक्तव्यं सामान्यसमरादिके ॥ १५ ॥
अन्यन्नास्ति प्रतीघातमेतस्य भुवनत्रये ॥
तस्मात्प्राणात्यये राम प्रयोक्तव्यमुपस्थिते ॥ १६ ॥
अन्यदैतत्प्रयुक्तं तु जगत्संक्षयकृद्भवेत् ॥
अथाहूय सुरश्रेष्ठान् लोकपालान्महेश्वरः ॥ १७ ॥
उवाच परमप्रीतः स्वं स्वमस्त्रं प्रयच्छत ॥
राघवोऽयं च तैरस्त्रै रावणं निहनिष्यति ॥ १८ ॥
तस्मै देवैरवध्यत्वामिति दत्तो वरो मया ॥
तस्माद्वानरतामेत्य भवन्तो युद्धदुर्मदाः ॥ १९ ॥
साहाय्यमस्य कुर्वन्तु तेन सुस्था भविष्यथ ॥

तदाज्ञां शिरसा गृह्य सुराः प्राञ्जलयस्तथा ॥ २० ॥
प्रणम्य चरणौ शंभोः स्वं स्वमस्त्रं ददुर्मुदा ॥
नारायणास्त्रं दैत्यारिरैन्द्रमस्त्रं पुरंदरः ॥ २१ ॥
ब्रह्मापि ब्रह्मदण्डास्त्रमाग्नेयास्त्रं धनंजयः ॥
याम्यं यमोऽपि मोहास्त्रं रक्षोराजस्तथा ददौ ॥ २२
वरुणो वारुणं प्रादाद्वायव्यास्त्रं प्रभञ्जनः ॥
कौवेरं च कुवेरोऽपि रौद्रमीशान एव च ॥ २३ ॥
सौरमस्त्रं ददौ सूर्यः सौम्यं सोमश्च पार्वतम् ॥
विश्वेदेवा ददुस्तस्मै वसवो वासवाभिधम् ॥ २४ ॥
अथ तुष्टः प्रणम्येशं रामो दशरथात्मजः ॥
प्राञ्जलिः प्रणतो भूत्वा भक्तियुक्तो व्याजिज्ञपत् ॥ २५
श्रीराम उवाच ॥ भगवन्मानुषेणैव नोल्लङ्घ्यो लवणाम्बुधिः
तत्र लङ्काभिधं दुर्गं दुर्जयं देवदानवैः ॥ २६ ॥
अनेककोटयस्तत्र राक्षसा बलवत्तराः ॥
सर्वे स्वाध्यायनिरताः शिवभक्ता जितेन्द्रियाः ॥ २७
अनेकमायासंयुक्ता बुद्धिमन्तोऽग्निहोत्रिणः ॥
कथमेकाकिना जेया मया भ्रात्रा च संयुगे ॥ २८
श्रीमहादेव उवाच ॥ रावणस्य वधे राम रक्षसामपि मारणे ॥
विचारो न त्वया कार्यस्तस्य कालोऽयमागतः ॥ २९
अधर्मे तु प्रवृत्तास्ते देवब्राह्मणपीडने ॥
तस्मादायुःक्षयं यातं तेषां श्रीरपि सुव्रत ॥ ३० ॥
राजस्त्रीकामनासक्तं रावणं निहानिष्यसि ॥
पापासक्तो रिपुर्जेतुः सुकरः समराङ्गणे ॥ ३१ ॥
अधर्मे निरतः शत्रुर्भाग्येनैव हि लभ्यते ॥
अधीतधर्मशास्त्रोऽपि सदा वेदरतोपि वा ॥ ३२ ॥
विनाशकाले संप्राप्ते धर्ममार्गाच्च्युतो भवेत् ॥

पीडयन्ते देवताः सर्वाः सततं येन पापिना ॥ ३३ ॥
ब्राह्मणा ऋषयश्चैव तस्य नाशः स्वयं स्थितः ॥
किष्किंधानगरे राम देवानामंशसंभवाः ॥ ३४ ॥
वानरा बहवो जाता दुर्जया बलवत्तराः ॥
साहाय्यं ते करिष्यंति तैर्बध्वा च पयोनिधिम् ॥ ३५ ॥
अनेकशैलसंबद्धे सेतौ यान्तु बलीमुखाः ॥
रावणं सगणं हत्वा तामानय निजां प्रियाम् ॥ ३६ ॥
शस्त्रैर्युद्धे जयो यत्र तत्रास्त्राणि न योजयेत् ॥
निरस्त्रेष्वल्पशस्त्रेषु पलायनपरेषु च ॥ ३७ ॥
अस्त्राणि मुञ्चन् दिव्यानि स्वयमेव विनश्यति ॥
अथवा किं बहूक्तेन मयैवोत्पादितं जगत् ॥ ३८ ॥
मयैव पाल्यते नित्यं मया संहियतेऽपि च ॥
अहमेको जगन्मृत्युर्मृत्योरपि महीपते ॥ ३९ ॥
ग्रसेऽहमेव सकलं जगदेतच्चराचरम् ॥
मम वक्त्रगताः सर्वे राक्षसा युद्धदुर्मदाः ॥ ४० ॥
निमित्तमात्रं त्वं भूयाः कीर्तिमाप्स्यसि संगरे ॥ ४१ ॥

इति श्रीपद्मपुराणे शिवगीतासु० रामाय वरप्रदानं नाम पञ्चमोऽध्यायः ॥५॥

---

श्रीराम उवाच ॥ भगवन्नत्र मे चित्रं महदेतत्प्रजायते ॥
शुद्धस्फटिकसंकाशस्त्रिनेत्रश्चन्द्रशेखरः ॥ १ ॥
मूर्तस्त्वं तु परिच्छिन्नाकृतिः पुरुषरूपधृक् ॥
अम्बया सहितोऽत्रैव रमसे प्रमथैः सह ॥ २ ॥
त्वं कथं पञ्चभूतादि जगदेतच्चराचरम् ॥
तद्ब्रूहि गिरिजाकान्त मयि तेऽनुग्रहो यदि ॥ ३ ॥
श्रीभगवानुवाच ॥ साधु पृष्टं महाभाग दुर्ज्ञेयममरैरपि ॥
तत्प्रवक्ष्यामि ते भक्त्या ब्रह्मचर्येण सुव्रत ॥ ४ ॥

पारं यास्यस्यनायासाद्येन संसारनीरधेः ॥
दृश्यन्ते पञ्च भूतानि ये च लोकाश्चतुर्दश ॥ ५ ॥
समुद्राः सरितो देवा राक्षसा ऋषयस्तथा ॥
दृश्यन्ते यानि चान्यानि स्थावराणि चराणि च ॥६॥
गन्धर्वाः प्रमथा नागाः सर्वे ते मद्विभूतयः ॥
पुरा ब्रह्मादयो देवा द्रष्टुकामा ममाकृतिम् ॥ ७ ॥
मंदरं प्रययुः सर्वे मम प्रियतरं गिरिम् ॥
स्तुत्वा प्राञ्जलयो देवा मां तदा पुरतः स्थिताः ॥८॥
तान्दृष्ट्वाथ मया देवान् लीलाकुलितचेतसः ॥
तेषामपहृतं ज्ञानं ब्रह्मादीनां दिवौकसाम् ॥ ९ ॥
अथ तेऽपहृतज्ञाना मामाहुः को भवानिति ॥
अथाब्रुवमहं देवानहमेव पुरातनः ॥ १० ॥
आसं प्रथममेवाहं वर्तामि च सुरेश्वराः ॥
भविष्यामि च लोकेऽस्मिन्मत्तो नान्योऽस्ति कश्चन॥११॥
व्यतिरिक्तं च मत्तोऽस्ति नान्यत्किञ्चित्सुरेश्वराः ॥
नित्योऽनित्योऽहमनघो ब्रह्मणां ब्रह्मणस्पतिः ॥ १२॥
दक्षिणाञ्च उदञ्चोऽहं प्राञ्चः प्रत्यञ्च एव च ॥
अधश्चोर्ध्वं च विदिशो दिशश्चाहं सुरेश्वराः ॥ १३॥
सावित्री चापि गायत्री स्त्री पुमानपुमानपि ॥
त्रिष्टुब्जगत्यनुष्टुप् च पंक्तिश्छन्दस्त्रयीमयः ॥ १४ ॥
सत्योऽहं सर्वगः शान्तस्त्रेताग्निर्गौर्यहं गुरुः ॥
गौर्यहं गह्वरं चाहं द्यौरहं जगतां विभुः ॥ १५ ॥
ज्येष्ठः सर्वसुरश्रेष्ठो वरिष्ठोऽहमपांपतिः ॥
आर्योऽहं भगवानीशस्तेजोऽहं चादिरप्यहम् ॥ १६॥
ऋग्वेदोऽहं यजुर्वेदः सामवेदोऽहमात्मभूः ॥
अथर्वणश्च मन्त्रोऽहं तथा चाङ्गिरसो वरः ॥ १७ ॥

इतिहासपुराणानि कल्पोऽहं कल्पवानहम् ॥
नाराशंसी च गाथाहं विद्योपनिषदोऽस्म्यहम् ॥ १८ ॥
श्लोकाः सूत्राणि चैवाहमनुव्याख्यानमेव च ॥
व्याख्यानानि परा विद्या इष्टं हुतमथाहुतिः ॥ १९ ॥
दत्तादत्तमयं लोकः परलोकोऽहमक्षरः ॥
क्षरः सर्वाणि भूतानि दान्तिः शान्तिरहं खगः ॥ २० ॥
गुह्योऽहं सर्ववेदेषु आरण्योहमजोऽप्यहम् ॥
पुष्करं च पवित्रं च मध्यं चाहमतः परम् ॥ २१ ॥
बहिश्चाहं तथा चांतः पुरस्तादहमव्ययः ॥
ज्योतिश्चाहं तमश्चाहं तन्मात्राणीन्द्रियाण्यहम् ॥ २२ ॥
बुद्धिश्चाहमहंकारो विषयाण्यहमेव हि ॥
ब्रह्मा विष्णुर्महेशोहमुमा स्कन्दो विनायकः ॥ २३ ॥
इन्द्रोऽग्निश्च यमश्चाहं निर्ऋतिर्वरुणोऽनिलः ॥
कुबेरोऽहं तथेशानो भूर्भुवः स्वर्महर्जनः ॥ २४ ॥
तपः सत्यं च पृथिवी चापस्तेजोऽनिलोऽप्यहम् ॥
आकाशोऽहं रविः सोमो नक्षत्राणि ग्रहास्तथा ॥ २५ ॥
प्राणः कालस्तथा मृत्युरमृतं भूतमप्यहम् ॥
भव्यं भविष्यत्कृत्स्नं च विश्वं सर्वात्मकोऽप्यहम् ॥२६॥
ओमादौ च तथा मध्ये भूर्भुवः स्वस्तथैव च ॥
ततोऽहं विश्वरूपोऽस्मि शीर्षे च जपतां सदा ॥ २७ ॥
अशितं पायितं चाहं कृतं चाकृतमप्यहम् ॥
परं चैवापरं चाहमहं सर्वपरायणः ॥ २८ ॥
अहं जगद्धितं दिव्यमक्षरं सूक्ष्ममव्ययम् ॥
प्राजापत्यं पवित्रं च सौम्यमग्राह्यमग्रियम् ॥ २९ ॥
अहमेवोपसंहर्ता महाग्रासौजसां निधिः ॥
हृदि यो देवतात्वेन प्राणत्वेन प्रतिष्ठितः ॥ ३० ॥

शिरश्चोत्तरतो यस्य पादौ दक्षिणतस्तथा ॥
यश्च सर्वोत्तरः साक्षादोङ्कारोऽहं त्रिमात्रकः ॥ ३१
ऊर्ध्वं चोन्नामये यस्मादधश्चापनयाम्यहम् ॥
तस्मादोङ्कार एवाहमेको नित्यः सनातनः ॥ ३२ ॥
ऋचो यजूंषि सामानि यो ब्रह्मा यज्ञकर्मणि ॥
प्रणामये ब्राह्मणेभ्यस्तेनाहं प्रणवो मतः ॥ ३३ ॥
स्नेहो यथा मांसपिण्डं व्याप्नोति व्यापयत्यपि ॥
सर्वान् लोकानहं तद्वत्सर्वव्यापी ततोऽस्म्यहम् ॥ ३४
ब्रह्मा हरिश्च भगवानाद्यन्तं नोपलब्धवान् ॥
ततोऽन्ये च सुरा यस्मादनन्तोऽहमितीरितः ॥ ३५
गर्भजन्मजरामृत्युसंसारभवसागरात् ॥
तारयामि यतो भक्तं तस्मात्तारोऽहमीरितः ॥ ३६ ॥
चतुर्विधेषु देहेषु जीवत्वेन वसाम्यहम् ॥
सूक्ष्मो भूत्वा च हृद्देशे यत्तत्सूक्ष्मं प्रकीर्तितः ॥ ३७
महातमसि मग्नेभ्यो भक्तेभ्यो यत्प्रकाशये ॥
विद्युद्वदतुलं रूपं तस्माद्वैद्युतमस्म्यहम् ॥ ३८ ॥
एक एव यतो लोकान् विसृजामि सृजामि च ॥
विवासयामि गृह्णामि तस्मादेकोऽहमीश्वरः ॥ ३९ ॥
न द्वितीयो यतस्तस्थे तुरीयं ब्रह्म यत्स्वयम् ॥
भूतान्यात्मनि संहृत्य चैको रुद्रो वसाम्यहम् ॥ ४०
सर्वाँल्लोकान्यदीशेहमीशिनीभिश्च शक्तिभिः ॥
ईशानमस्य जगतः स्वर्दृशं चक्षुरीश्वरम् ॥ ४१ ॥
ईशानश्चास्मि जगतां सर्वेषामपि सर्वदा ॥
ईशानः सर्वविद्यानां यदीशानस्ततोऽस्म्यम् ॥ ४२
सर्वभावान्निरीक्षेऽहमात्मज्ञानं निरीक्षये ॥
योगं च गमये तस्माद्भगवान्महतो मतः ॥ ४३ ॥

अजस्रं यच्च गृह्णामि विसृजामि सृजामि च ॥
सर्वाँल्लोकान्वासयामि तेनाहं वै महेश्वरः ॥ ४४ ॥
महत्यात्मज्ञानयोगैश्वर्ये यस्तु महीयते ॥
सर्वान् भावान् परित्यज्य महादेवश्च सोऽस्म्यहम् ॥४५॥
एषोस्मि देवः प्रदिशो नु सर्वाः पूर्वो हि जातोस्म्यहमेव गर्भे ॥ अहं हि जातश्च जनिष्यमाणः प्रत्यग्जनस्तिष्ठति सर्वतोमुखः ॥ ४६ ॥
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ॥ संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ ४७ ॥
वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं वरेण्यम् ॥ मामात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ४८ ॥
अहं योनिमधितिष्ठामि चैको मयेदं पूर्णं पञ्चविधं च सर्वम् ॥ मामीशानं पुरुषं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥ ४९ ॥
प्राणेष्वन्तर्मनसो लिङ्गमाहुरस्मिन्क्रोधो या च तृष्णा क्षमा च ॥ तृष्णां हित्वा हेतुजालस्य मूलं बुद्ध्या चित्तं स्थापयित्वा मयीह ॥ एवं ये मां ध्यायमाना भजंते तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ५० ॥
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥
आनन्दं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन ॥ ५१ ॥
श्रुत्वेति देवा मद्वाक्यं कैवल्यज्ञानमुत्तमम् ॥
जपन्तो मम नामानि मम ध्यानपरायणाः ॥ ५२ ॥
सर्वे ते स्वस्वदेहान्ते मत्सायुज्यं गताः पुरा ॥
ततोऽग्रे परिदृश्यन्ते पदार्था मद्विभूतयः ॥ ५३ ॥

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ ५४ ॥
अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विशुद्धः ॥
पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूप
स्मि ॥ ५५ ॥
अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणो
म्यकर्णः ॥ अहं विजानामि विविक्तरूपो न चास्ति वे
मम चित्सदाहम् ॥ ५६ ॥
वेदैरशेषैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ।
न पुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रियबुद्धि
रस्ति ॥ ५७ ॥
न भूमिरापो न च वह्निरस्ति न चानिलो मेऽस्ति न
नभश्च ॥ एवं विदित्वा परमात्मरूपं गुहाशयं निष्कल
मद्वितीयम् ॥ ५८ ॥
समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ५
एवं मां तत्त्वतो वेत्ति यस्तु राम महामते ॥
स एव नान्यो लोकेषु कैवल्यफलमश्नुते ॥ ६० ॥
इति श्रीशिवगीतासु॰ विभूतियोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीराम उवाच ॥ भगवन्यन्मया पृष्टं तत्तथैव स्थितं विभो ॥
अत्रोत्तरं मया लब्धं त्वत्तो नैव महेश्वर ॥ १ ॥
परिच्छिन्नपरीमाणे देहे भगवतस्तव ॥
उत्पत्तिः पञ्चभूतानां स्थितिर्वा विलयः कथम् ॥ २ ॥
स्वस्वाधिकारसंबद्धाः कथं नाम स्थिताः सुराः ॥
ते सर्वे त्वं कथं देव भुवनानि चतुर्दश ॥ ३ ॥
त्वत्तः श्रुत्वापि देवात्र संशयो मे महानभूत् ॥

अप्रत्यायितचित्तस्य संशयं छेत्तुमर्हसि ॥ ४ ॥
श्रीभगवानुवाच ॥ वटबीजेऽतिसूक्ष्मेऽपि महावटतरुर्यथा ॥
सर्वदास्तेऽन्यथा वृक्षः कुत आयाति तद्वद ॥ ५ ॥
तद्वन्मम तनौ राम भूतानामागतिर्लयः ॥
महासैन्धवपिण्डोऽपि जले क्षिप्तो विलीयते ॥ ६ ॥
न दृश्यते पुनः पाकात्कुत आयाति पूर्ववत् ॥
प्रातःप्रातर्यथाऽऽलोको जायते सूर्यमण्डलात् ॥ ७ ॥
एवं मत्तो जगत्सर्वं जायतेऽस्ति विलीयते ॥
मय्येव सकलं राम तद्वज्जानीहि सुव्रत ॥ ८ ॥
श्रीराम उवाच ॥ कथितेऽपि महाभाग दिग्जडस्य यथा दिशि ॥
निवर्तते भ्रमो नैव तद्वन्मम करोमि किम् ॥ ९ ॥
श्रीभगवानुवाच ॥ मयि सर्वं यथा राम जगदेतच्चराचरम् ॥
वर्तते तद्दर्शयामि न द्रष्टुं क्षमते भवान् ॥ १० ॥
दिव्यं चक्षुः प्रदास्यामि तुभ्यं दशरथात्मज ॥
तेन पश्य भयं त्यक्त्वा मत्तेजोमण्डलं ध्रुवम् ॥ ११ ॥
न चर्मचक्षुषा द्रष्टुं शक्यते मामकं महः ॥
नरेण वा सुरेणापि तन्ममानुग्रहं विना ॥ १२ ॥
सूत उवाच ॥इत्युक्त्वा प्रददौ तस्मै दिव्यं चक्षुर्महेश्वरः॥
अथादर्शयदेतस्मै वक्त्रं पातालसंनिभम् ॥ १३ ॥
विद्युत्कोटिप्रभं दीप्तमतिभीमं भयावहम् ॥
तद्दृष्ट्वैव भयाद्रामो जानुभ्यामवनिं गतः ॥१४॥
प्रणम्य दण्डवद्भूमौ तुष्टाव च पुनः पुनः ॥
अथोत्थाय महावीरो यावदेव प्रपश्यति ॥ १५ ॥
वक्त्रं पुरभिदस्तत्र अन्तर्ब्रह्माण्डकोटयः ॥
चटका इव लक्ष्यन्ते ज्वालामालासमाकुलाः ॥ १६ ॥
मेरुमन्दरविंध्याद्या गिरयः सप्त सागराः॥

दृश्यन्ते चन्द्रसूर्याद्याः पञ्च भूतानि ते सुराः ॥ १७
अरण्यानि महानागा भुवनानि चतुर्दश ॥
प्रतिब्रह्माण्डमेवं तद्दृष्ट्वा दशरथात्मजः ॥ १८ ॥
सुरासुराणां संग्रामास्तत्र पूर्वापरानपि ॥
विष्णोर्दशावतारांश्च तत्तत्कर्माण्यपि द्विजाः ॥ १९॥
पराभवांश्च देवानां पुरदाहं महेशितुः ॥
उत्पद्यमानानुत्पन्नान्सर्वानपि विनश्यतः ॥ २० ॥
दृष्ट्वा रामो भयाविष्टः प्रणनाम पुनः पुनः ॥
उत्पन्नतत्त्वज्ञानोऽपि बभूव रघुनन्दनः ॥ २१ ॥
अथोपनिषदां सारैरर्थैस्तुष्टाव शंकरम् ॥ २२ ॥

श्रीराम उवाच ॥ देव प्रपन्नार्तिहर प्रसीद प्रसीद विश्वेश्वर वि
श्ववन्द्य ॥ प्रसीद गङ्गाधर चन्द्रमौले मां त्राहि संसा
रभयादनाथम् ॥ २३ ॥

त्वत्तो हि जातं जगदेतदीश त्वय्येव भूतानि वसन्ति
नित्यम् ॥ त्वय्येव शंभो विलयं प्रयान्ति भूमौ यथा
वृक्षलतादयोऽपि ॥ २४ ॥

ब्रह्मेन्द्ररुद्राश्च मरुद्गणाश्च गन्धर्वयक्षाऽसुरसिद्धसङ्घाः ॥
गङ्गादिनद्यो वरुणालयाश्च वसन्ति शूलिंस्तव वक्त्र
यंत्रे ॥ २५ ॥

त्वन्मायया कल्पितमिन्दुमौले त्वय्येव दृश्यत्वमुपैति
विश्वम् ॥ भ्रान्त्या जनः पश्यति सर्वमेतच्छुक्तौ यथा
रौप्यमहिं च रज्जौ ॥ २६ ॥

तेजोभिरापूर्य जगत्समस्तं प्रकाशमानः कुरुषे प्रका
शम् ॥ विना प्रकाशं तव देवदेव न दृश्यते विश्वमि
क्षणेन ॥ २७ ॥

अल्पाश्रयो नैव बृहन्तमर्थं धत्तेऽणुरेको न हि विन्ध्य

शैलम् ॥ त्वद्दृक्त्रमात्रे जगदेतदस्ति त्वन्माययैवेति विनिश्चिनोमि ॥ २८ ॥
रज्जौ भुजङ्गो भयदो यथैव न जायते नास्ति न चैति नाशम् ॥ त्वन्मायया केवलमात्तरूपं तथैव विश्वं त्वयि नीलकण्ठ ॥ २९ ॥
विचार्यमाणे तव यच्छरीरमाधारभावं जगतामुपैति ॥ तदप्यवश्यं मदविद्ययैव पूर्णश्चिदानन्दमयो यतस्त्वम् ३०
पूजेष्टपूर्तादिवरक्रियाणां भोक्तुः फलं यच्छसि विश्वमेव ॥ मृषैतदेवं वचनं पुरारे त्वत्तोऽस्ति भिन्नं न च किञ्चिदेव ॥ ३१ ॥
अज्ञानमूढा मुनयो वदन्ति पूजोपचारादिबहिःक्रियाभिः ॥ तोषं गिरीशो भजतीति मिथ्या कुतस्त्वमूर्तस्य तु भोगलिप्सा ॥ ३२ ॥
किञ्चिद्दलं वा चुलकोदकं वा यस्त्वं महेश प्रतिगृह्य दत्से ॥ त्रैलोक्यलक्ष्मीमपि यज्जनेभ्यः सर्वं त्वविद्याकृतमेव मन्ये ॥ ३३ ॥
व्याप्नोषि सर्वा विदिशो दिशश्च त्वं विश्वमेकः पुरुषः पुराणः ॥ नष्टेऽपि तस्मिंस्तव नास्ति हानिर्घटे विनष्टे नभसो यथैव ॥ ३४ ॥
यथैकमाकाशगमर्कबिम्बं क्षुद्रेषु पात्रेषु जलान्वितेषु ॥ भजत्यनेकप्रतिबिम्बभावं तथा त्वमन्तःकरणेषु देव ३५
संसर्जने वाऽप्यवने विनाशे विश्वस्य किञ्चित्तव नास्ति कार्यम् ॥ अनादिभिः प्राणभृतामदृष्टैस्तथापि तत्स्वप्नवदातनोषि ॥ ३६ ॥
स्थूलस्य सूक्ष्मस्य जडस्य भोगो देहस्य शंभो न चिदं विनास्ति ॥ अतस्त्वदारोपणमातनोति श्रुतिः पुरारे

सुखदुःखयोः सदा ॥ ३७ ॥
नमः सच्चिदाम्भोधिहंसाय तुभ्यं नमः कालकाल
कालात्मकाय ॥ नमस्ते समस्ताघसंहारकर्त्रे नमः
मृषाचित्तवृत्त्यैकभोक्त्रे ॥ ३८ ॥
सूत उवाच ॥एवं प्रणम्य विश्वेशं पुरतः प्राञ्जलिः स्थितः ॥
विस्मितः परमेशानं जगाद रघुनन्दनः ॥ ३९ ॥
श्रीराम उवाच ॥ उपसंहर विश्वात्मन्विश्वरूपमिदं तव ॥
प्रतीतं जगदैकात्म्यं शंभो भवदनुग्रहात् ॥ ४० ॥
श्रीभगवानुवाच। पश्य राम महाबाहो मत्तो नान्योऽस्तिकश्चन४
सूत उवाच ॥ उत्युक्त्वैवोपसंजह्रे स्वदेहे देवतादिकान् ॥
मीलिताक्षः पुनर्हर्षाद्यावद्रामः प्रपश्यति ॥ ४२ ॥
तावदेव गिरेः शृङ्गे व्याघ्रचर्मोपरि स्थितम् ॥
ददर्श पञ्चवदनं नीलकण्ठं त्रिलोचनम् ॥ ४३ ॥
व्याघ्रचर्माम्बरधरं भूतिभूषितविग्रहम् ॥
फणिकङ्कणभूषाढ्यं नागयज्ञोपवीतिनम् ॥ ४४ ॥
व्याघ्रचर्मोत्तरीयं च विद्युत्पिङ्गजटाधरम् ॥
एकाकिनं चन्द्रमौलिं वरेण्यमभयप्रदम् ॥ ४५ ॥
चतुर्भुजं खण्डपरशुं मृगहस्तं जगत्पतिम् ॥
अथाज्ञया पुरस्तस्य प्रणम्योपविवेश सः ॥ ४६ ॥
अथाह रामं देवेशो यद्यत्प्रष्टुमभीच्छसि ॥
तत्सर्वं पृच्छ राम त्वं मत्तो नान्योऽस्ति ते गुरुः॥४७
॥ इति श्रीशिवगीतासु० विश्वरूपदर्शनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीराम उवाच॥ पाञ्चभौतिकदेहस्य चोत्पत्तिर्विलयः स्थितिः
स्वरूपं च कथं देव भगवन्वक्तुमर्हसि ॥ १ ॥
श्रीभगवानुवाच॥ पञ्चभूतैः समारब्धो देहोऽयं पाञ्चभौतिकः

तत्र प्रधानं पृथिवी शेषाणां सहकारिता ॥ २ ॥
जरायुजोऽण्डजश्चैव स्वेदजश्चोद्भिजस्तथा ॥
एवं चतुर्विधः प्रोक्तो देहोऽयं पाञ्चभौतिकः ॥ ३ ॥
मानसस्तु परः प्रोक्तो देवानामेव संस्मृतः ॥
तत्र वक्ष्ये प्रथमतः प्रधानत्वाज्जरायुजम् ॥ ४ ॥
शुक्रशोणितसंभूता वृत्तिरेव जरायुजः ॥
स्त्रीणां गर्भाशये शुक्रमृतुकाले विशेद्यदा ॥ ५ ॥
योषितो रजसा युक्तं तदेव स्याज्जरायुजम् ॥
बाहुल्याद्रजसः स्त्री स्याच्छुक्राधिक्ये पुमान्भवेत् ॥६॥
शुक्रशोणितयोः साम्ये जायते च नपुंसकः ॥
ऋतुस्नाता भवेन्नारी चतुर्थे दिवसे ततः ॥७॥
ऋतुकालस्तु निर्दिष्ट आषोडशदिनावधि ॥
तत्रायुग्मदिने स्त्री स्यात्पुमान्युग्मदिने भवेत् ॥ ८ ॥
षोडशे दिवसे गर्भो जायते यदि सुभ्रुवः ॥
चक्रवर्ती भवेद्राजा जायते नात्र संशयः ॥ ९ ॥
ऋतुस्नाता यस्य पुंसः साकाङ्क्षं मुखमीक्षते ॥
तदाकृतिर्भवेद्गर्भस्तत्पश्येत्स्वामिनो मुखम् ॥ १० ॥
याऽस्ति चर्मावृतिः सूक्ष्मा जरायुः सा निगद्यते ॥
शुक्रशोणितयोर्योगस्तस्मिन्नेव भवेद्यतः ॥
तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरायुजः ॥ ११ ॥
अण्डजाः पक्षिसर्पाद्याः स्वेदजा मशकादयः ॥
उद्भिज्जास्तृणगुल्माद्या मानसाश्च सुरर्षयः ॥ १२ ॥
जन्मकर्मवशादेव निषिक्तं स्मरमन्दिरे ॥
शुक्रं रजःसमायुक्तं प्रथमे मासि तद्द्रवम् ॥ १३ ॥
बुद्बुदं कललं तस्मात्ततः पेशी भवेदिदम् ॥
पेशीघनं द्वितीये तु मासि पिण्डः प्रजायते ॥ १४ ॥

कराङ्घ्रिशीर्षकादीनि तृतीये संभवन्ति हि ॥
अभिव्यक्तिश्च जीवस्य चतुर्थे मासि जायते ॥ १५
ततश्चलति गर्भोऽपि जनन्या जठरे स्वतः ॥
पुत्रश्चेद्दक्षिणे पार्श्वे कन्या वामे च तिष्ठति ॥ १६ ॥
नपुंसकस्तूदरस्य भागे तिष्ठति मध्यतः ॥
अतो दक्षिणपार्श्वे तु शेते माता पुमान्यदि ॥ १७
अङ्गप्रत्यङ्गभागाश्च सूक्ष्माः स्युर्युगपत्तदा ॥
विहाय श्मश्रुदन्तादीञ्जन्मानन्तरसंभवान् ॥ १८ ॥
चतुर्थे व्यक्तता तेषां भावानामपि जायते ॥
पुंसां स्थैर्यादयो भावा भीरुत्वाद्यास्तु योषिताम् ॥ १९
नपुंसके च ते मिश्रा भवन्ति रघुनन्दन ॥
मातृजं चास्य हृदयं विषयानभिकाङ्क्षति ॥ २०
ततो मातुर्मनोऽभीष्टं कुर्याद्गर्भवि[illegible] ॥
तां च द्विहृदयां नारीमाहु[illegible] ततः ॥ २१ ॥
अदानाद्दौहृदानां स्युर्गर्भस्य व्यङ्गतादयः ॥
मातुर्यद्विषये लोभस्तदार्तो जायते सुतः ॥ २२ ॥
प्रबुद्धं पञ्चमे चित्तं मांसशोणितपुष्टता ॥
षष्ठेऽस्थिस्नायुनखरकेशलोमविविक्तता ॥ २३ ॥
बलवर्णौ चोपचितौ सप्तमे त्वङ्गपूर्णता ॥
पादान्तरितहस्ताभ्यां श्रोत्ररन्ध्रे पिधाय सः ॥ २४
उद्विग्नो गर्भसंवासादस्ति गर्भलयान्वितः ॥ २५ ॥
आविर्भूतप्रबोधोऽसौ गर्भदुःखादिसंयुतः ॥
हा कष्टमिति निर्विण्णः स्वात्मानं शोशुचीत्यथ ॥ २६
अनुभूता महासह्याः पुरा मर्मच्छिदोऽसकृत् ॥
करंभवालुकास्तप्ताश्चादह्यन्तासुखाशयाः ॥ २७ ॥
जठरानलसंतप्तपित्ताख्यरसविप्लुषः ॥

गर्भाशये निमग्नं तु दहन्त्यतिभृशं तु माम् ॥ २८ ॥
उदर्यक्रमिवक्त्राणि कूटशाल्मलिकण्टकैः ॥
तुल्यानि च तुदन्त्यार्तं पार्श्वास्थिक्रकचार्दितम् ॥२९॥
गर्भे दुर्गन्धभूयिष्ठे जठराग्निप्रदीपिते ॥
दुःखं मयाप्तं यत्तस्मात्कनीयः कुम्भपाकजम् ॥ ३० ॥
पूयासृक्श्लेष्मपायित्वं वान्ताशित्वं च यद्भवेत् ॥
अशुचौ कृमिभावश्च तत्प्राप्तं गर्भशायिना ॥ ३१ ॥
गर्भशय्यां समारुह्य दुःखं यादृङ्मयापि तत् ॥
नातिशेते महादुःखं निःशेषनरकेषु तत् ॥ ३२ ॥
एवं स्मरन्पुरा प्राप्ता नानाजातीश्च यातनाः ॥
मोक्षोपायमभिध्यायन्वर्ततेऽभ्यासतत्परः ॥ ३३ ॥
अष्टमे त्वक्स्मृती स्यातामोजस्तेजश्च हृद्भवम् ॥
शुभ्रमापीतरक्तं च निमित्तं जीवितं मतम् ॥ ३४ ॥
मातरं च पुनर्गर्भं चञ्चलं तत्प्रधावति ॥
ततो जातोऽष्टमे गर्भो न जीवत्योजसोज्झितः ॥ ३५॥
किंचित्कालमवस्थानं संस्कारात्पीडिताङ्गवत् ॥
समयः प्रसवस्य स्यान्मासेषु नवमादिषु ॥ ३६ ॥
मातुरस्रवहां नाडीमाश्रित्यान्ववतारिता ॥
नाभिस्थनाडी गर्भस्य मात्राहाररसावहा ॥
तेन जीवति गर्भोऽपि मात्राहारेण पोषितः ॥ ३७ ॥
अस्थियन्त्रविनिष्पिष्टः पतितः कुक्षिवर्त्मना ॥
मेदोऽसृग्दिग्धसर्वाङ्गो जरायुपुटसंवृतः ॥ ३८ ॥
निष्क्रामन्भृशदुःखार्तो रुदन्नुच्चैरधोमुखः ॥
यन्त्रादेव विनिर्मुक्तः पतत्युत्तानशाय्युत ॥ ३९ ॥
अकिंचित्करस्तथा बालो मांसपेशीसमास्थितः ॥
श्वमार्जारादिदंष्ट्रिभ्यो रक्ष्यते दण्डपाणिभिः ॥ ४० ॥

पितृवद्राक्षसं वेत्ति मातृवड्डाकिनीमपि ॥
पूयं पयोवदज्ञानाद्दीर्घकष्टं तु शैशवम् ॥ ४१ ॥
श्लेष्मणा पिहिता नाडी सुषुम्ना यावदेव हि ॥
व्यक्तवर्णं च वचनं तावद्वक्तुं न शक्यते ॥ ४२ ॥
अतएव च गर्भेऽपि रोदितुं नैव शक्यते ॥ ४३ ॥
दृप्तोऽथ यौवनं प्राप्य मन्मथज्वरविह्वलः ॥
गायत्यकस्मादुच्चैस्तु तथाकस्माच्च वल्गति ॥ ४४ ॥
आरोहति तरून्वेगाच्छान्तानुद्वेजयत्यपि ॥
कामक्रोधमदान्धः सन्न कांश्चिदपि वीक्षते ॥ ४५ ॥
अस्थिमांसशिरालाया वामाया मन्मथालये ॥
उत्तानपूतिमण्डूकपाटितोदरसन्निभे ॥
आसक्तः स्मरबाणार्त आत्मना दह्यते भृशम् ॥ ४६ ॥
अस्थिमांसशिरात्वगभ्यः किमन्यद्वर्तते वपुः ॥
वामानां मायया मूढो न किंचिद्वीक्षते जगत् ॥ ४७ ॥
निर्गते प्राणपवने देहो हंत मृगीदृशः ॥
यथाहि जायते नैव वीक्ष्यते पञ्चषैर्दिनैः ॥ ४८ ॥
महापरिभवस्थानं जरां प्राप्यातिदुःखितः ॥
श्लेष्मणा पिहितोरस्को जग्धमन्नं न जीर्यति ॥ ४९ ॥
सन्नदन्तो मन्ददृष्टिः कटुतिक्तकषायभुक् ॥
वातभुग्नकटिग्रीवकरोरुचरणोऽबलः ॥ ५० ॥
गदायुतसमाविष्टः परित्यक्तः स्वबन्धुभिः ॥
निःशौचो मलदिग्धाङ्ग आलिङ्गितवरोषितः ॥ ५१ ॥
ध्यायन्नसुलभान्भोगान्केवलं वर्तते चलः ॥
सर्वेन्द्रियक्रियालोपाद्धस्यते बालकैरपि ॥ ५२ ॥
ततो मृतिजदुःखस्य दृष्टान्तो नोपलभ्यते ॥
यस्माद्बिभ्यति भूतानि प्राप्तान्यपि परां रुजम् ॥ ५३ ॥

नीयते मृत्युना जन्तुः परिष्वक्तोऽपि बन्धुभिः ॥
सागरान्तर्जलगतो गरुडेनेव पन्नगः ॥ ५४ ॥
हा कान्ते हा धनं पुत्राः क्रन्दमानः सुदारुणम् ॥
मण्डूक इव सर्पेण मृत्युना नीयते नरः ॥ ५५ ॥
मर्मसून्मथ्यमानेषु मुच्यमानेषु संधिषु ॥
यद्दुःखं म्रियमाणस्य स्मर्यतां तन्मुमुक्षुभिः ॥ ५६ ॥
दृष्टावाक्षिप्यमाणायां संज्ञया ह्रियमाणया ॥
मृत्युपाशेन बद्धस्य त्राता नैवोपलभ्यते ॥ ५७ ॥
संरुध्यमानस्तमसा महच्चित्तमिवाविशन् ॥
उपाहूतस्तदा ज्ञातीनीक्षते दीनचक्षुषा ॥ ५८ ॥
अयःपाशेन कालेन स्नेहपाशेन बन्धुभिः ॥
आत्मानं कृष्यमाणं तं वीक्षते परितस्तथा ॥ ५९ ॥
हिक्कया बाध्यमानस्य श्वासेन परिशुष्यतः ॥
मृत्युनाकृष्यमाणस्य न खल्वस्ति परायणम् ॥ ६० ॥
संसारयन्त्रमारूढो यमदूतैरधिष्ठितः ॥
क्व यास्यामीति दुःखार्तः कालपाशेन योजितः ॥६१॥
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ॥
इतिकर्तव्यतामूढः कृच्छ्राद्देहात्त्यजत्यसून् ॥ ६२ ॥
यातनादेहसंबद्धो यमदूतैरधिष्ठिताः ॥
इतो गत्वानुभवति या यास्ता यमयातनाः ॥
तासु यल्लभते दुःखं तद्वक्तुं क्षमते कुतः ॥ ६३ ॥
कर्पूरचन्दनाद्यैस्तु लिप्यते सततं हि यत् ॥
भूषणैर्भूष्यते चित्रैः सुवस्त्रैः परिवार्यते ॥ ६४ ॥
अस्पृश्यं जायतेऽप्रेक्ष्यं जीवत्यक्तं सदा वपुः ॥
निष्कासयन्ति निलयात्क्षणं न स्थापयन्त्यपि ॥६५॥
दह्यते च ततः काष्ठैस्तद्भस्म क्रियते क्षणात् ॥

भक्ष्यते वा सृगालैश्च गृध्रकुक्करवायसैः ॥
पुनर्न दृश्यते सोऽथ जन्मकोटिशतैरपि ॥ ६६ ॥
माता पिता गुरुजनः स्वजनो ममेति मायोपमे जग
कस्य भवेत्प्रतिज्ञा ॥ एको यतो व्रजति कर्मपुरःसरो
विश्रामवृक्षसदृशः खलु जीवलोकः ॥ ६७ ॥
सायं सायं वासवृक्षं समेताः प्रातः प्रातस्तेन तेन प्रय
न्ति ॥ त्यक्त्वान्योन्यं तं च वृक्षं विहङ्गा यद्वत्तद्वज्ज्ञा
योऽज्ञातयश्च ॥ ६८ ॥
मृतिबीजं भवेज्जन्म जन्मबीजं भवेन्मृतिः
घटयंत्रवदश्रान्तो बम्भ्रमीत्यनिशं नरः ॥ ६९ ॥
गर्भे पुंसः शुक्रपाताद्यदुक्तं मरणावधि ॥
तदेतस्य महाव्याधेर्मत्तो नान्योऽस्ति भेषजम् ॥ ७०

इति श्रीशिवगीतासु० पिण्डोत्पत्तिकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

---

श्रीभगवानुवाच ॥ देहस्वरूपं वक्ष्यामि शृणुष्वावहितो नृप।
मत्तो हि जायते विश्वं मयैवैतत्प्रधार्यते ॥
मय्येवेदमधिष्ठाने लीयते शुक्तिरौप्यवत् ॥ १ ॥
अहं तु निर्मलः पूर्णः सच्चिदानन्दविग्रहः ॥
असंगो निरहंकारः शुद्धं ब्रह्म सनातनम् ॥ २ ॥
अनाद्यविद्यायुक्तः सन् जगत्कारणतां व्रजे ॥ ३ ॥
अनिर्वाच्या महाविद्या त्रिगुणा परिणामिनी ॥
रजः सत्त्वं तमश्चेति त्रिगुणाः परिकीर्तिताः ॥ ४ ॥
सत्त्वं शुक्लं समादिष्टं सुखज्ञानास्पदं नृणाम् ॥
दुःखास्पदं रक्तवर्णं चञ्चलं च रजो मतम् ॥ ५ ॥
तमः कृष्णं जडं प्रोक्तमुदासीनं सुखादिषु ॥ ६ ॥
अतो मम समायोगाच्छक्तिः सा त्रिगुणात्मिका ॥

अधिष्ठाने तु मय्येव भजते विश्वरूपताम् ॥
शुक्तौ रजतवद्रज्जौ भुजङ्गो यद्वदेव तु ॥ ७ ॥
आकाशादीनि जायन्ते मत्तो भूतानि मायया ॥
तैरारब्धमिदं विश्वं देहोऽयं पाञ्चभौतिकः ॥ ८ ॥
पितृभ्यामशितादन्नात्षट्कोशं जायते वपुः ॥
स्नायवोऽस्थीनि मज्जा च जायन्ते पितृतस्तथा ॥ ९ ॥
त्वङ्मांसशोणितमिति मातृतश्च भवन्ति हि ॥
भावाः स्युः षड्विधास्तस्य मातृजाः पितृजास्तथा ॥
रसजा आत्मजाः सत्त्वसंभूताः स्वात्मजास्तथा ॥१०॥
मृदवः शोणितं मेदो मज्जा प्लीहा यकृद्गुदम् ॥
हृन्नाभीत्येवमाद्यास्तु भावा मातृभवा मताः ॥ ११ ॥
श्मश्रुलोमकचस्नायुशिराधमनयो नखाः ॥
दशनाः शुक्रमित्याद्याः स्थिराः पितृसमुद्भवाः ॥ १२॥
शरीरोपचितिर्वर्णो वृद्धिस्तृप्तिर्बलं स्थितिः ॥
अलोलुपत्वमुत्साह इत्यादि रसजं विदुः ॥ १३ ॥
इच्छा द्वेषः सुखं दुःखं धर्माधर्मौ च भावना ॥
प्रयत्नो ज्ञानमायुश्चेन्द्रियाणीत्येवमात्मजाः ॥ १४ ॥
ज्ञानेन्द्रियाणि श्रवणं स्पर्शनं दर्शनं तथा ॥
रसनं घ्राणमित्याहुः पञ्च तेषां तु गोचराः ॥ १५ ॥
शब्दः स्पर्शस्तथा रूपं रसो गंध इति क्रमात् ॥
वाक्कराङ्घ्रिगुदोपस्थान्याहुः कर्मेन्द्रियाणि हि ॥ १६ ॥
वचनादानगमनविसर्गरतयः क्रमात् ॥
कर्मेंद्रियाणां जानीयान्मनश्चैवोभयात्मकम् ॥ १७ ॥
क्रियास्तेषां मनोबुद्धिरहंकारस्ततः परम् ॥
अन्तःकरणमित्याहुश्चित्तं चेति चतुष्टयम् ॥ १८ ॥
सुखं दुःखं च विषयौ विज्ञेयौ मनसः क्रियाः ॥

स्मृतिर्भीतिविकल्पाद्या बुद्धिः स्यान्निश्चयात्मिका ॥
अहं ममेत्यहंकारश्चित्तं चेतयते यतः ॥ १९ ॥
सत्त्वाख्यमन्तःकरणं गुणभेदात्त्रिधा मतम् ॥
सत्त्वं रजस्तम इति गुणाः सत्त्वात्तु सात्त्विकाः ॥ २०
आस्तिक्यशुद्धिधर्मैकमतिप्रभृतयो मताः ॥
रजसो राजसा भावाः कामक्रोधमदादयः ॥ २१ ॥
निद्रालस्यप्रमादादि वञ्चनाद्यास्तु तामसाः॥
प्रसन्नेन्द्रियतारोग्यानालस्याद्यास्तु सत्त्वजाः ॥ २२ ॥
देहो मात्रात्मकस्तस्मादादत्ते तद्गुणानिमान् ॥
शब्दः श्रोत्रं मुखरता वैचित्र्यं सूक्ष्मता धृतिः ॥ २३
बलं च गगनाद्वायोः स्पर्शश्च स्पर्शनेन्द्रियम् ॥
उत्क्षेपणमपक्षेपाकुञ्चने गमनं तथा ॥ २४ ॥
प्रसारणमितीमानि पञ्च कर्माणि रूक्षता ॥
प्राणापानौ तथा व्यानसमानोदानसंज्ञकान् ॥ २५ ॥
नागः कूर्मश्च कृकलो देवदत्तो धनंजयः ॥
दशैता वायुविकृतीस्तथा गृह्णाति लाघवम् ॥ २६ ॥
तेषां मुख्यतरः प्राणो नाभेः कण्ठादवस्थितः ॥
चरत्यसौ नासिकयोर्नाभौ हृदयपङ्कजे ॥ २७ ॥
शब्दोच्चारणनिश्वासोच्छ्वासादेरपि कारणम् ॥ २८ ॥
अपानस्तु गुदे मेढ्रे कटिजङ्घोदरेष्वपि ॥
नाभिकंठे वंक्षणयोरूरुजानुषु तिष्ठति ॥
तस्य मूत्रपुरीषादिविसर्गः कर्म कीर्तितम् ॥ २९ ॥
व्यानोऽक्षिश्रोत्रगुल्फेषु जिह्वाघ्राणेषु तिष्ठति ॥
प्राणायामधृतित्यागग्रहणाद्यस्य कर्म च ॥ ३० ॥
समानो व्याप्य निखिलं शरीरं वह्निना सह ॥
द्विसप्ततिसहस्रेषु नाडीरन्ध्रेषु संचरन् ॥ ३१ ॥

भुक्तपीतरसान्सम्यगानयन्देहपुष्टिकृत् ॥
उदानः पादयोरास्ते हस्तयोरङ्गसंधिषु ॥ ३२ ॥
कर्मास्य देहोन्नयनोत्क्रमणादि प्रकीर्तितम् ॥
त्वगादिधातूनाश्रित्य पञ्च नागादयः स्थिताः ॥ ३३ ॥
उद्गारादि निमेषादि क्षुत्पिपासादिकं क्रमात् ॥
तन्द्रीप्रभृति शोकादि तेषां कर्म प्रकीर्तितम् ॥ ३४ ॥
अग्नेस्तु रोचकं रूपं दीप्तं पाकं प्रकाशताम् ॥
अमर्षतीक्ष्णसूक्ष्माणामोजस्तेजश्च शूरताम् ॥ ३५ ॥
मेधावितां तथाऽऽदत्ते जलात्तु रसनं रसम् ॥
शैत्यं स्नेहं द्रवं स्वेदं गात्रादिमृदुतामपि ॥ ३६ ॥
भूमेर्घ्राणेन्द्रियं गन्धं स्थैर्यं धैर्यं च गौरवम् ॥
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥ ३७ ॥
अन्नं पुंसाशितं त्रेधा जायते जठराग्निना ॥
मलः स्थविष्ठो भागः स्यान्मध्यमो मांसतां व्रजेत् ॥
मनः कनिष्ठो भागः स्यात्तस्मादन्नमयं मनः ॥ ३८ ॥
अपां स्थविष्ठो मूत्रं स्यान्मध्यमो रुधिरं भवेत् ॥
प्राणः कनिष्ठो भागः स्यात्तस्मात्प्राणो जलात्मकः॥३९॥
तेजसोऽस्थि स्थविष्ठः स्यान्मज्जा मध्यमसंभवः ॥
कनिष्ठा वाङ्मता तस्मात्तेजोऽबन्नात्मकं जगत् ॥ ४० ॥
लोहिताज्जायते मांसं मेदो मांससमुद्भवम् ॥
मेदसोऽस्थीनि जायन्ते मज्जा चास्थिसमुद्भवा ॥४१॥
नाड्योपि मांससंघाताच्छुक्रं मज्जासमुद्भवम् ॥ ४२ ॥
वातपित्तकफाश्चात्र धातवः परिकीर्तिताः ॥
दशाञ्जलि जलं ज्ञेयं रसस्याञ्जलयो नव ॥ ४३ ॥
रक्तस्याष्टौ पुरीषस्य सप्त स्युः श्लेष्मणश्च षट् ॥
पित्तस्य पञ्च चत्वारो मूत्रस्याञ्जलयस्त्रयः ॥ ४४ ॥

वसाया मेदसो द्वौ तु मज्जा त्वञ्जलिसंमिता ॥
अर्धाञ्जलि तथा शुक्रं तदेव बलमुच्यते ॥ ४५ ॥
अस्थ्नां शरीरे संख्या स्यात्षष्टियुक्तं शतत्रयम् ॥
जलजानि कपालानि रुचकास्तरणानि च ॥
नलकानीति तान्याहुः पञ्चधास्थीनि सूरयः ॥ ४
द्वे शते त्वास्थिसंधीनां स्यातां तत्र दशोत्तरे ॥
रौरवाः प्रसराः स्कन्दसेचनाः स्युरुलूखलाः ॥ ४
समुद्रा मण्डलाः शंखावर्ता वामनकुण्डलाः ॥
इत्यष्टधा समुद्दिष्टाः शरीरेष्वास्थिसंधयः ॥ ४८ ॥
सार्धकोटित्रयं रोम्णां श्मश्रुकेशास्त्रिलक्षकाः ॥
देहस्वरूपमेवं ते प्रोक्तं दशरथात्मज ॥ ४९ ॥
यस्मादसारो नास्त्येव पदार्थो भुवनत्रये ॥
देहेऽस्मिन्नभिमानेन न महोपायबुद्धयः ॥ ५० ॥
अहंकारेण पापेन क्रियन्ते हंत सांप्रतम् ॥
तस्मादेतत्स्वरूपं तु विबोद्धव्यं मुमुक्षुभिः ॥ ५१
इति श्रीशिवगीतासु० देहस्वरूपनिर्णयो नाम नवमोऽध्यायः ॥ ९

---

श्रीराम उवाच ॥ भगवन्नत्र जीवोऽसौ जन्तोर्देहेऽवतिष्ठते
जायते वा कुतो जीवः स्वरूपं चास्य किं वद ॥
देहान्ते कुत्र वा याति गत्वा वा कुत्र तिष्ठति ॥
कथमायाति वा देहं पुनर्नायाति वा वद ॥ २ ॥
श्रीभगवानुवाच ॥ साधु पृष्टं महाभाग गुह्याद्गुह्यतरं हि
देवैरपि सुदुर्ज्ञेयमिन्द्राद्यैर्वा महर्षिभिः ॥ ३ ॥
अन्यस्मै नैव वक्तव्यं मयापि रघुनन्दन ॥
त्वद्भक्त्याहं परं प्रीतो वक्ष्याम्यवहितः शृणु ॥ ४
सत्यज्ञानात्मकोऽनन्तः परमानन्दविग्रहः ॥

परमात्मा परंज्योतिरव्यक्तो व्यक्तकारणम् ॥ ५ ॥
नित्यो विशुद्धः सर्वात्मा निर्लेपोऽहं निरञ्जनः ॥
सर्वधर्मविहीनश्च न ग्राह्यो मनसापि च ॥ ६ ॥
नाहं सर्वेन्द्रियग्राह्यः सर्वेषां ग्राहको ह्यहम् ॥
ज्ञाताहं सर्वलोकस्य मम ज्ञाता न विद्यते ॥ ७ ॥
दूरः सर्वविकाराणां परिणामादिकस्य च ॥ ८ ॥
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ॥
आनन्दं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन ॥ ९ ॥
यस्तु सर्वाणि भूतानि मय्येवेति प्रपश्यति ॥
मां च सर्वेषु भूतेषु ततो न विजुगुप्सते ॥ १० ॥
यस्य सर्वाणि भूतानि ह्यात्मैवाभूद्विजानतः ॥
को मोहस्तत्र कः शोक एकत्वमनुपश्यतः ॥ ११ ॥
एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ॥
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥१२॥
अनाद्यविद्यया युक्तस्तथाप्येकोऽहमव्ययः ॥
अव्याकृतब्रह्मरूपो जगत्कर्ताहमीश्वरः ॥ १३ ॥
ज्ञानमात्रे यथा दृश्यमिदं स्वप्ने जगत्त्रयम् ॥
तद्वन्मयि जगत्सर्वं दृश्यतेऽस्ति विलीयते ॥ १४ ॥
नानाविद्यासमायुक्तो जीवत्वेन वसाम्यहम् ॥
पञ्च कर्मेन्द्रियाण्येव पञ्च ज्ञानेन्द्रियाणि च ॥ १५ ॥
मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् ॥
वायवः पञ्च मिलिता यान्ति लिङ्गशरीरताम् ॥ १६ ॥
तत्राविद्यासमायुक्तं चैतन्यं प्रतिबिम्बितम् ॥
व्यावहारिकजीवस्तु क्षेत्रज्ञः पुरुषोऽपि च ॥ १७ ॥
स एव जगतां भोक्तानाद्ययोः पुण्यपापयोः ॥
इहामुत्र गती तस्य जाग्रत्स्वप्नादिभोक्तृता ॥ १८ ॥

यथा दर्पणकालिम्ना मलिनं दृश्यते मुखम् ॥
तद्वदन्तःकरणगैर्दोषैरात्मापि दृश्यते ॥ १९ ॥
परस्पराध्यासवशात्स्यादन्तःकरणात्मनोः ॥
एकीभावाभिमानेन परात्मा दुःखभागिव ॥ २० ॥
मरुभूमौ जलत्वेन मध्याह्नार्कमरीचिकाः ॥
दृश्यन्ते मूढचित्तस्य न ह्यार्द्रास्तापकारकाः ॥२१॥
तद्वदात्मापि निर्लेपो दृश्यते मूढचेतसाम् ॥
स्वाविद्यात्मात्मदोषेण कर्तृत्वादिकधर्मवान् ॥ २२
तत्र चान्नमये पिण्डे हृदि जीवोऽवतिष्ठते ॥
आनखाग्रं व्याप्य देहं तद्ब्रुवेऽवहितः शृणु ॥
सोऽयं तदभिधानेन मांसपिण्डो विराजते ॥ २३ ॥
नाभेरूर्ध्वमधः कण्ठाद्व्याप्य तिष्ठति यः सदा ॥
तस्य मध्येऽस्ति हृदयं सनालं पद्मकोशवत् ॥ २४
अधोमुखं च तत्रास्ति सूक्ष्मं सुषिरमुत्तमम् ॥
दहराकाशमित्युक्तं तत्र जीवोऽवतिष्ठते ॥ २५ ॥
वालाग्रशतभागस्य शतधा कल्पितस्य च ॥
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ २६
कदम्बकुसुमोद्बद्धकेसरा इव सर्वतः ॥
प्रसृता हृदयान्नाड्यो याभिर्व्याप्तं शरीरकम् ॥ २७ ॥
हितं बलं प्रयच्छन्ति तस्मात्तेन हिताः स्मृताः ॥
द्वासप्ततिसहस्रैस्ताः संख्याता योगवित्तमैः ॥ २८ ॥
हृदयात्तास्तु निष्क्रान्ता यथार्काद्रश्मयस्तथा ॥
एकोत्तरशतं तासु मुख्या विष्वग्विनिर्गताः ॥ २९ ॥
प्रतीन्द्रियं दश दश निर्गता विषयोन्मुखाः ॥
नाड्यः शर्मादिहेतुत्वात् स्वप्नादिफलभुक्तये ॥ ३० ॥
वहन्त्यम्भो यथा नद्यो नाड्यः कर्मफलं तथा ॥

अनन्तैकोर्ध्वगा नाडी मूर्धपर्यन्तमञ्जसा ॥ ३१ ॥
सुषुम्नेति समादिष्टा तया गच्छन्विमुच्यते ॥
तयोपचितचैतन्यं जीवात्मानं विदुर्बुधाः ॥ ३२ ॥
यथा राहुरदृश्योऽपि दृश्यते चन्द्रमण्डले ॥
तद्वत्सर्वगतोऽप्यात्मा लिङ्गदेहे हि दृश्यते ॥ ३३ ॥
दृश्यमाने यथा कुंभे घटाकाशोऽपि दृश्यते ॥
तद्वत्सर्वगतोऽप्यात्मा लिङ्गदेहेऽपि दृश्यते ॥ ३४ ॥
निश्चलः परिपूर्णोऽपि गच्छतीत्युपचर्यते ॥
जाग्रत्काले यथाज्ञेयमभिव्यक्तविशेषधीः ॥ ३५ ॥
व्याप्नोति निष्क्रियः सर्वान् भानुर्दश दिशो यथा ॥
नाडीभिर्वृत्तयो यान्ति लिङ्गदेहसमुद्भवाः ॥ ३६ ॥
तत्तत्कर्मानुसारेण जाग्रद्भोगोपलब्धये ॥
इदं लिङ्गशरीराख्यमामोक्षं न विनश्यति ॥ ३७ ॥
आत्मज्ञानेन नष्टेऽस्मिन्साविद्ये स्वशरीरके ॥
आत्मस्वरूपावस्थानं मुक्तिरित्यभिधीयते ॥ ३८ ॥
उत्पादिते घटे यद्वद्घटाकाशत्वमृच्छति ॥
घटे नष्टे यथाकाशः स्वरूपेणावतिष्ठते ॥ ३९ ॥
जाग्रत्कर्मक्षयवशात्स्वप्नभोग उपस्थिते ॥
बोधावस्थां तिरोधाय देहाद्याश्रयलक्षणाम् ॥ ४० ॥
कर्मोद्भावितसंस्कारस्तत्र स्वप्नरिरंसया ॥
अवस्थां च प्रयात्यन्यां मायावी चात्ममायया ॥ ४१ ॥
घटादिविषयान्सर्वान्बुद्ध्यादिकरणानि च ॥
भूतानि कर्मवशतो वासनामात्रसंस्थितान् ॥ ४२ ॥
एतान् पश्यन् स्वयंज्योतिः साक्ष्यात्मा व्यवतिष्ठते॥४३॥
अत्रान्तःकरणादीनां वासनाद्वासनात्मता ॥
वासनामात्रसाक्षित्वं तेन तच्च परात्मनः ॥ ४४ ॥

वासनाभिः प्रपञ्चोऽत्र दृश्यते कर्मचोदितः ॥
जाग्रद्भूमौ यथा तद्वत्कर्तृकर्मक्रियात्मकः ॥ ४५ ॥
निःशेषबुद्धिसाक्ष्यात्मा स्वयमेव प्रकाशते ॥
वासनामात्रसाक्षित्वं साक्षिणःस्वाप उच्यते ४६ ॥
भूतजन्मनि यद्भूतं कर्म तद्वासनावशात् ॥
नेदीयस्त्वाद्वयस्याद्ये स्वप्नं प्रायः प्रपश्यति ॥ ४७ ॥
मध्ये वयसि कार्कश्यात्करणानामिहार्जितः ॥
वीक्षते प्रायशः स्वप्नं वासनाकर्मणोर्वशात् ॥ ४८ ॥
इयासुः परलोकं तु कर्मविद्यादिसंभृतम् ॥
भाविनो जन्मनो रूपं स्वप्न आत्मा प्रपश्यति ॥ ४९ ॥
यद्वत्प्रपतनाच्छ्येनः श्रान्तो गगनमण्डले ॥
आकुञ्च्य पक्षौ यतते नीडे निलयनाय नीः ॥ ५० ॥
एवं जाग्रत्स्वप्नभूमौ श्रान्त आत्माभिसंचरन् ॥
आपीतकरणग्रामः कारणेनैति चैकताम् ॥ ५१ ॥
नाडीमार्गैरिन्द्रियाणामाकृष्यादाय वासनाः ॥
सर्वं ग्रसित्वा कार्यं च विज्ञानात्मा विलीयते ॥ ५२ ॥
ईश्वराख्येऽव्याकृतेऽथ यथा सुखमयो भवेत् ॥
कृत्स्नप्रपञ्चविलयस्तथा भवति चात्मनः ॥ ५३ ॥
योषितः काम्यमानायाः संभोगान्ते यथा सुखम् ॥
स आनन्दमयोऽबाह्यो नान्तरः केवलस्तथा ॥ ५४ ॥
प्राज्ञात्मानं समासाद्य विज्ञानात्मा तथैव सः ॥
विज्ञानात्मा कारणात्मा तथा तिष्ठंस्तथापि सः ॥ ५५ ॥
अविद्यासूक्ष्मवृत्त्यानुभवत्येव सुखं यथा ॥
तथाहं सुखमस्वाप्सं नैव किञ्चिदवेदिषम् ॥ ५६ ॥
अज्ञानमपि साक्ष्यादि वृत्तिभिश्चानुभूयते ॥
इत्येवं प्रत्यभिज्ञापि पश्चात्तस्योपजायते ॥ ५७ ॥

जाग्रत्स्वप्नसुषुप्त्याख्यमेवेहामुत्र लोकयोः ॥
पश्चात्कर्मवशादेव विस्फुलिङ्गा यथानलात् ॥
जायन्ते कारणादेव मनोबुद्ध्यादिकानि तु ॥ ५८ ॥
पयःपूर्णो घटो यद्वन्निमग्नः सलिलाशये ॥
तैरेवोद्धृत आयाति विज्ञानात्मा तथैत्यजात् ॥ ५९ ॥
विज्ञानात्मा कारणात्मा तथा तिष्ठंस्तथापि सः ॥
दृश्यते सत्सु तेष्वेव नष्टेष्वायात्यदृश्यताम् ॥ ६० ॥
एकाकारोऽर्यमा तत्तत्कार्येष्विव परः पुमान् ॥
कूटस्थो दृश्यते तद्वद्गच्छत्यागच्छतीव सः ॥ ६१ ॥
मोहमात्रान्तरायत्वात्सर्वं तस्योपपद्यते ॥
देहाद्यतीत आत्मापि स्वयंज्योतिः स्वभावतः ॥ ६२ ॥
एवं जीवस्वरूपं ते प्रोक्तं दशरथात्मज ॥ ६३ ॥
इति श्रीशिवगीतासु० जीवस्वरूपकथनं नाम दशमोऽध्यायः ॥ १० ॥

---

श्रीभगवानुवाच ॥ देहान्तरगतिं तस्य परलोकगतिं तथा ॥
वक्ष्यामि नृपशार्दूल मत्तः शृणु समाहितः ॥ १ ॥
भुक्तं पीतं यदस्त्यत्र तद्रसादामबन्धनम् ॥
स्थूलदेहस्य लिङ्गस्य तेन जीवनधारणम् ॥ २ ॥
व्याधिना जरया वापि पीड्यते जाठरोऽनलः॥
श्लेष्मणा तेन भुक्तान्नं पीतं वा न पचत्यलम् ॥ ३ ॥
भुक्तपीतरसाभावादाशु शुष्यन्ति धातवः ॥
भुक्तपीतरसेनैव देहं लिम्पन्ति वायवः ॥ ४ ॥
समीकरोति यस्मात्तत्समानो वायुरुच्यते ॥
तदानीं तद्रसाभावादामबन्धनहानितः ॥ ५ ॥
परिपक्वरसत्वेन यथा गौरवतः फलम् ॥
स्वयमेव पतत्याशु तथा लिङ्गं तनोर्व्रजेत् ॥ ६ ॥

तत्तत्स्थानादपाकृष्य हृषीकाणां च वासनाः ॥
आध्यात्मिकाधिभूतानि हृत्पद्मे चैकतां गतः ॥ ७ ॥
तद्वोर्ध्वगः प्राणवायुः संयुक्तो नववायुभिः ॥
ऊर्ध्वोच्छ्वासी भवत्येष तथा तेनैकतां गतः ॥ ८ ॥
चक्षुषो वाथ मूर्ध्नो वा नाडीमार्गं समाश्रितः ॥
विद्याकर्मसमायुक्तो वासनाभिश्च संयुतः ॥
प्राज्ञात्मानं समाश्रित्य विज्ञानात्मोपसर्पति ॥ ९ ॥
यथा कुम्भो नीयमानो देशाद्देशान्तरं प्रति ॥
खपूर्ण एव सर्वत्र स आकाशोऽपि तत्र तु ॥ १० ॥
घटाकाशाख्यतां याति तद्वल्लिङ्गं परात्मनः ॥ ११ ॥
पुनर्देहान्तरं याति यथा कर्मानुसारतः ॥
आमोक्षात्संचरत्येवं मत्स्यः कूलद्वयं यथा ॥ १२ ॥
पापभोगाय चेद्गच्छेद्यमदूतैरधिष्ठितः ॥
यातनादेहमाश्रित्य नरकानेव केवलम् ॥ १३ ॥
इष्टापूर्तादिकर्माणि योऽनुतिष्ठति सर्वदा ॥
पितृलोकं व्रजत्येष धूममाश्रित्य बर्हिषः ॥ १४ ॥
धूमाद्रात्रिं ततः कृष्णपक्षं तस्माच्च दक्षिणम् ॥
अयनं च ततो लोकं पितॄणां च ततः परम् ॥
चन्द्रलोके दिव्यदेहं प्राप्य भुंक्ते परां श्रियम् ॥ १५ ॥
तत्र चन्द्रमसा सोऽसौ यावत्कर्मफलं वसेत् ॥
तथैव कर्मशेषेण यथेतं पुनराव्रजेत् ॥ १६ ॥
वपुर्विहाय जीवत्वमासाद्याकाशमेति सः ॥
आकाशाद्वायुमागत्य वायोरम्भो व्रजत्यथ ॥ १७ ॥
अद्भ्यो मेघं समासाद्य ततो वृष्टिर्भवेदसौ ॥
ततो धान्यानि भक्ष्याणि जायते कर्मचोदितः ॥ १८ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ॥

भुक्तिमन्येऽनुसंयान्ति यथाकर्म यथाश्रुतम् ॥ १९ ॥
ततोऽन्नत्वं समासाद्य पितृभ्यां भुज्यते परम् ॥
ततः शुक्रं रजश्चैव भूत्वा गर्भोऽभिजायते ॥ २० ॥
ततः कर्मानुसारेण भवेत्स्त्रीपुन्नपुंसकः ॥
एवं जीवगतिः प्रोक्ता मुक्तिं तस्य वदामि ते ॥ २१ ॥
यस्तु शान्त्यादियुक्तः सन्सदा विद्यारतो भवेत् ॥
स याति देवयानेन ब्रह्मलोकावधिं नरः ॥ २२ ॥
अर्चिर्भूत्वा दिनं प्राप्य शुक्लपक्षमथो व्रजेत् ॥
उत्तरायणमासाद्य संवत्सरमथो व्रजेत् ॥ २३ ॥
आदित्यचन्द्रलोकौ तु विद्युल्लोकमतः परम् ॥
अथ दिव्यः पुमान्कश्चिद्ब्रह्मलोकादहैति सः ॥ २४ ॥
दिव्ये वपुषि संधाय जीवमेवं नयत्यसौ ॥ २५ ॥
ब्रह्मलोके दिव्यदेहे भुक्त्वा भोगान्यथेप्सितान् ॥
तत्रोषित्वा चिरं कालं ब्रह्मणा सह मुच्यते ॥ २६ ॥
शुद्धब्रह्मरतो यस्तु न स यात्येव कुत्रचित् ॥
तस्य प्राणा विलीयन्ते जले सैन्धवखिल्यवत् ॥ २७ ॥
स्वप्नदृष्टा यथा सृष्टिः प्रबुद्धस्य विलीयते ॥
ब्रह्मज्ञानवतस्तद्वद्विलीयन्ते तदैव ते ॥
विद्याकर्मविहीनो यस्तृतीयं स्थानमेति सः ॥ २८ ॥
भुक्त्वा च नरकान्घोरान्महारौरवरौरवान् ॥
पश्चात्प्राक्तनशेषेण क्षुद्रजन्तुर्भवेदसौ ॥ २९ ॥
यूकामशकदंशादि जन्मासौ लभते भुवि ॥
एवं जीवगतिः प्रोक्ता किमन्यच्छ्रोतुमिच्छसि ॥ ३० ॥
श्रीराम उवाच ॥ भगवन्नन्यत्त्वया प्रोक्तं फलं तज्ज्ञानकर्मणोः ॥
ब्रह्मलोके चंद्रलोके भुङ्क्ते भोगानिति प्रभो ॥ ३१ ॥
गन्धर्वादिषु लोकेषु कथं भोगः समीरितः ॥

देवत्वं प्राप्नुयात्कश्चित्कश्चिदिन्द्रत्वमेति च ॥ ३२ ॥
एतत्कर्मफलं वास्तु विद्याफलमथापि वा ॥
तद्ब्रूहि गिरिजाकान्त तत्र मे संशयो महान् ॥ ३३ ॥
श्रीभगवानुवाच ॥ तद्विद्याकर्मणोरेवानुसारेण फलं भवेत् ॥
युवा च सुन्दरः शूरो नीरोगो बलवान् भवेत् ॥ ३४ ॥
सप्तद्वीपां वसुमतीं भुङ्क्ते निष्कण्टकं यदि ॥
स प्रोक्तो मानुषानन्दस्तस्माच्छतगुणो मतः ॥ ३५ ॥
मनुष्यस्तपसा युक्तो गन्धर्वो जायतेऽस्य तु ॥
तस्माच्छतगुणो देवगन्धर्वाणां न संशयः ॥ ३६ ॥
एवं शतगुणानन्द उत्तरोत्तरतो भवेत् ॥
पितॄणां चिरलोकानामाजानसुरसंपदाम् ॥ ३७ ॥
देवतानामथेन्द्रस्य गुरोस्तद्वत्प्रजापतेः ॥
ब्रह्मणश्चैवमानन्दः पुरस्तादुत्तरोत्तरः ॥ ३८ ॥
ज्ञानाधिक्यात्सुखाधिक्यं नान्यदस्ति सुरालये ॥
श्रोत्रियोऽवृजिनोऽकामहतो यश्च द्विजो भवेत् ॥ ३९ ॥
तस्याप्येवं समाख्याता आनन्दाश्चोत्तरोत्तरम् ॥
आत्मज्ञानात्परं नास्ति तस्माद्दशरथात्मज ॥ ४० ॥
ब्राह्मणः कर्मभिर्नैव वर्धते नैव हीयते ॥
न लिप्यते पातकेन कर्मणा ज्ञानवान्यदि ॥ ४१ ॥
तस्मात्सर्वाधिको विप्रो ज्ञानवानेव जायते ॥
ज्ञात्वा यः कुरुते कर्म तस्याक्षय्यफलं भवेत् ॥ ४२ ॥
यत्फलं लभते मर्त्यः कोटिब्राह्मणभोजनैः॥
तत्फलं समवाप्नोति ज्ञानिनं यस्तु भोजयेत् ॥ ४३ ॥
ज्ञानवन्तं द्विजं यस्तु द्विषते च नराधमः ॥
स शुष्यमाणो म्रियते यस्मादीश्वर एव सः ॥ ४४ ॥
उपासको न यात्येव यस्मात्पुनरधोगतिम् ॥

उपासनरतो भूत्वा तस्मादास्स्व सुखी नृप ॥ ४५ ॥

इति श्रीशिवगीतासु० जीवगत्यादिनिरूपणं नामैकादशोऽध्यायः ॥११॥

---

श्रीराम उवाच ॥ भगवन्देवदेवेश नमस्तेऽस्तु महेश्वर ॥
उपासनविधिं ब्रूहि देशं कालं च तस्य तु ॥ १ ॥
अङ्गानि नियमांश्चैव मयि तेऽनुग्रहो यदि ॥
ईश्वर उवाच ॥ शृणु राम प्रवक्ष्यामि देशं कालमुपासने॥ २ ॥
सर्वाकारोऽहमेवैकः सच्चिदानन्दविग्रहः ॥
मदंशेन परिच्छिन्ना देहाः सर्वदिवौकसाम् ॥ ३ ॥
ये त्वन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ॥
तेऽपि मामेव राजेन्द्र यजन्त्यविधिपूर्वकम् ॥ ४ ॥
यस्मात्सर्वमिदं विश्वं मत्तो न व्यतिरिच्यते ॥
सर्वक्रियाणां भोक्ताहं सर्वस्याहं फलप्रदः ॥ ५ ॥
येनाकारेण ये मर्त्या मामेवैकमुपासते ॥
तेनाकारेण तेभ्योऽहं प्रसन्नो वाञ्छितं ददे ॥ ६ ॥
विधिनाऽविधिना वापि भक्त्या ये मामुपासते ॥
तेभ्यः फलं प्रयच्छामि प्रसन्नोऽहं न संशयः ॥ ७ ॥
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ८ ॥
स्वजीवत्वेन यो वेत्ति मामेवैकमनन्यधीः ॥
तं न स्पृशन्ति पापानि ब्रह्महत्यादिकान्यपि ॥ ९ ॥
उपासाविधयस्तत्र चत्वारः परिकीर्तिताः ॥
संपदारोपसंवर्गाध्यासा इति मनीषिभिः ॥ १० ॥
अल्पस्य चाधिकत्वेन गुणयोगाद्विचिन्तनम् ॥
अनन्तं वै मन इति संपद्विधिरुदीरितः ॥ ११ ॥
विधावारोप्य योपासा सारोपः परिकीर्तितः ॥

यद्वदोङ्कारमुद्गीथमुपासीतेत्युदाहृतः ॥ १२ ॥
आरोपो बुद्धिपूर्वेण य उपासाविधिश्च सः ॥
योषित्यग्निमतिर्यत्तदध्यासः स उदाहृतः ॥ १३ ॥
क्रियायोगेन चोपासाविधेः संवर्ग उच्यते ॥
संवर्तवायुः प्रलये भूतान्येकोऽवसीदति ॥ १४ ॥
उपसंगम्य बुद्ध्या यदासनं देवतात्मना ॥
तदुपासनमन्तः स्यात्तद्बहिः संपदादयः ॥ १५ ॥
ज्ञानान्तरानन्तरितसजातिज्ञानसंहतेः ॥
संपन्नदेवतात्मत्वमुपासनमुदीरितम् ॥ १६ ॥
संपदादिषु बाह्येषु दृढबुद्धिरुपासनम् ॥
कर्मकाले तदङ्गेषु दृष्टिमात्रमुपासनम् ॥
उपासनमिति प्रोक्तं तदङ्गानि ब्रुवे शृणु ॥ १७ ॥
तीर्थक्षेत्रादिगमनं श्रद्धां तत्र परित्यजेत् ॥
स्वचित्तैकाग्रता यत्र तत्रासीत सुखं द्विजः ॥ १८ ॥
कम्बले मृदुतल्पे वा व्याघ्रचर्मणि वास्थितः ॥
विविक्तदेशे नियतः समग्रीवशिरस्तनुः ॥ १९ ॥
अत्याश्रमस्थः सकलानीन्द्रियाणि निरुध्य च ॥
भक्त्याथ स्वगुरुं नत्वा योगं विद्वान्प्रयोजयेत् ॥ २० ॥
यस्त्वविज्ञानवान्भवत्ययुक्तमनसा सदा ॥
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ २१ ॥
विज्ञानी यस्तु भवति युक्तेन मनसा सदा ॥
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ २२ ॥
यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ॥
न स तत्पदमाप्नोति संसारमाधिगच्छति ॥ २३ ॥
विज्ञानी यस्तु भवति समनस्कः सदा शुचिः ॥
स तत्पदमवाप्नोति यस्माद्भूयो न जायते ॥ २४ ॥

विज्ञानसारथिर्यस्तु मनःप्रग्रह एव च ॥
सोऽध्वनः पारमाप्नोति ममैव परमं पदम् ॥ २५ ॥
हृत्पुण्डरीकं विरजं विशुद्धं विशदं तथा ॥
विशोकं च विचिन्त्यात्र ध्यायेन्मां परमेश्वरम् ॥ २६ ॥
अचिन्त्यरूपमव्यक्तमनन्तममृतं शिवम् ॥
आदिमध्यान्तरहितं प्रशान्तं ब्रह्म कारणम् ॥ २७ ॥
एकं विभुं चिदानन्दमरूपमजमद्भुतम् ॥
शुद्धस्फटिकसंकाशमुमादेहार्धधारिणम् ॥ २८ ॥
व्याघ्रचर्माम्बरधरं नीलकण्ठं त्रिलोचनम् ॥
जटाधरं चन्द्रमौलिं नागयज्ञोपवीतिनम् ॥ २९ ॥
व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम् ॥
पराभ्यामूर्ध्वहस्ताभ्यां बिभ्राणं परशुं मृगम् ॥ ३० ॥
कोटिमध्याह्नसूर्याभं चन्द्रकोटिसुशीतलम् ॥
चन्द्रसूर्याग्निनयनं स्मेरवक्त्रसरोरुहम् ॥ ३१ ॥
भूतिभूषितसर्वाङ्गं सर्वाभरणभूषितम् ॥
एवमात्मारणिं कृत्वा प्रणवं चोत्तरारणिम् ॥
ध्याननिर्मथनाभ्यासात्साक्षात्पश्यति मां जनः ॥ ३२ ॥
वेदवाक्यैरलभ्योऽहं न शास्त्रैर्नापि चेतसा ॥
ध्यानेन वृणुते यो मां सर्वदाहं वृणोमि तम् ॥ ३३ ॥
नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ॥
नाशान्तमानसो वापि प्रज्ञानेन लभेत माम् ॥ ३४ ॥
जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चो यः प्रकाशते ॥
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ ३५ ॥
त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ॥
तज्ज्योतिर्लक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ ३६ ॥
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥

सर्वाध्यक्षःसर्वभूताधिवासःसाक्षी चेता केवलो निर्गु
एको वशी सर्वभूतान्तरात्माप्येकं बीजं नित्यदा
करोति ॥ तं मां नित्यं येऽनुपश्यन्ति धीरास्तेषां शा
शाश्वती नेतरेषाम् ॥ ३८ ॥

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुः
बाह्यः ॥ ३९ ॥

वेदेह यो मां पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्
स एव विद्वानमृतोऽत्र भूयान्नान्यस्तु पन्था अयना
विद्यते ॥ ४० ॥

हिरण्यगर्भं विदधामि पूर्वं वेदांश्च तस्मै प्रहिणोमि योऽह
तं देवमीड्यं पुरुषं पुराणं निश्चित्य मां मृत्युमुखात्प्रमुच्य
एवं शान्त्यादियुक्तः सन्वेत्ति मां तत्त्वतस्तु यः ॥
निर्मुक्तदुःखसंतानः सोऽन्ते मय्येव लीयते ॥ ४२

॥ इति श्रीशिवगीतासु० उपासनाज्ञानफलं नाम द्वादशोऽध्यायः॥ १२

---

सूत उवाच ॥ एवं श्रुत्वा कौसलेयस्तुष्टो मतिमतां वरः ॥
पप्रच्छ गिरिजाकान्तं सुभगं मुक्तिलक्षणम् ॥ १ ॥
श्रीराम उवाच ॥ भगवन्करुणाविष्टहृदय त्वं प्रसीद मे ॥
स्वरूपलक्षणं मुक्तेः प्रब्रूहि परमेश्वर ॥ २ ॥
श्रीभगवानुवाच ॥ सालोक्यमपि सारूप्यं साष्टर्यं सायुज्यमेव
कैवल्यं चेति तां विद्धि मुक्तिं राघव पञ्चधा ॥ ३
मां पूजयति निष्कामः सर्वदा ज्ञानवर्जितः ॥
स मे लोकं समासाद्य भुङ्क्ते भोगान्यथेप्सितान्॥ ४
ज्ञात्वा मां पूजयेद्यस्तु सर्वकामविवर्जितः ॥
मया समानरूपः सन्मम लोके महीयते ॥ ५ ॥

इष्टापूर्तादिकर्माणि मत्प्रीत्यै कुरुते तु यः ॥
यत्करोति यदश्नाति यज्जुहोति ददाति यत् ॥ ६ ॥
यत्तपस्यति तत्सर्वं यः करोति मदर्पणम् ॥
मल्लोके स श्रियं भुङ्क्ते मत्तुल्यं प्राभवं भजेत् ॥ ७ ॥
यस्तु शान्त्यादियुक्तः सन्मामात्मत्वेन पश्यति ॥
स जायते परं ज्योतिरद्वैतं ब्रह्म केवलम् ॥
आत्मस्वरूपावस्थानं मुक्तिरित्यभि यते ॥ ८ ॥
सत्यं ज्ञानमनन्तं सदानन्दं ब्रह्म केवलम् ॥
सर्वधर्मविहीनं च मनोवाचामगोचरम् ॥ ९ ॥
सजातीयविजातीयपदार्थानामसंभवात् ॥
अतस्तद्व्यतिरिक्तानामद्वैतमिति संज्ञितम् ॥ १० ॥
मत्वा रूपमिदं राम शुद्धं यदभिधीयते ॥
मय्येव दृश्यते सर्वं जगत्स्थावरजङ्गमम् ॥ ११ ॥
व्योम्नि गन्धर्वनगरं यथा दृष्टं न दृश्यते ॥
अनाद्यविद्यया विश्वं सर्वं मय्येव कल्प्यते ॥ १२ ॥
मम स्वरूपज्ञानेन यदाऽविद्या प्रणश्यति ॥
त ्क एव वर्त्तेऽहं मनोवाचामगोचरः ॥ १३ ॥
सदैव परमानन्दः स्वप्रकाशश्चिदात्मकः ॥
न कालः पञ्चभूतानि न दिशो विदिशश्च न ॥ १४ ॥
मदन्यन्नास्ति यत्किञ्चित्तदा वर्त्तेऽहमेकलः ॥ १५ ॥
न संदृशे तिष्ठति मे स्वरूपं न चक्षुषा पश्यति मां तु कश्चित्।
हृदा मनीषा मनसाभिक्लृप्तं ये मां विदुस्ते ह्यमृता भवन्ति
श्रीराम उवाच ॥ कथं भगवतो ज्ञानं शुद्धं मर्त्यस्य जायते ॥
तत्रोपायं हर ब्रूहि मयि तेऽनुग्रहो यदि ॥ १७ ॥
श्रीभगवानुवाच ॥ विरज्य सर्वभूतेभ्य आविरिंचिपदादपि ॥
घृणां वितत्य सर्वत्र पुत्रमित्रादिकेष्वपि ॥ १८ ॥

श्रद्धालुर्भक्तिमार्गेषु वेदान्तज्ञानलिप्सया ॥
उपायनकरो भूत्वा गुरुं ब्रह्मविदं व्रजेत् ॥ १९ ॥
सेवाभिः परितोष्यैनं चिरकालं समाहितः ॥
सर्ववेदान्तवाक्यार्थं शृणुयात्सुसमाहितः ॥ २० ॥
सर्ववेदान्तवाक्यानां मयि तात्पर्यनिश्चयम् ॥
श्रवणं नाम तत्प्राहुः सर्वे ते ब्रह्मवादिनः ॥ २१ ॥
लोहमण्यादिदृष्टान्तयुक्तिभिर्यद्विचिन्तनम् ॥
तदेव मननं प्राहुर्वाक्यार्थस्योपबृंहणम् ॥ २२ ॥
निर्ममो निरहंकारः समः संगविवर्जितः ॥
सदा शान्त्यादियुक्तः सन्नात्मन्यात्मानमीक्षते ॥ २३
यत्सदा ध्यानयोगेन तन्निदिध्यासनं स्मृतम् ॥ २४
सर्वकर्मक्षयवशात्साक्षात्कारोऽपि चात्मनः ॥
कस्यचिज्जायते शीघ्रं चिरकालेन कस्यचित् ॥ २५
कूटस्थानीह कर्माणि कोटिजन्मार्जितान्यपि ॥
ज्ञानेनैव विनश्यन्ति न तु कर्मायुतैरपि ॥ २६ ॥
ज्ञानादूर्ध्वं तु यत्किञ्चित्पुण्यं वा पापमेव वा ॥
क्रियते वहु वाल्पं वा न तेनायं विलिप्यते ॥ २७
शरीरारम्भकं यत्तु प्रारब्धं कर्म जन्मिनः ॥
तद्भोगेनैव नष्टं स्यान्न तु ज्ञानेन नश्यति ॥ २८
निर्मोहो निरहंकारो निर्लेपः संगवर्जितः ॥
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥
यः पश्यन्संचरत्येष जीवन्मुक्तोऽभिधीयते ॥ २९
अहिनिर्ल्वयिनी यद्वद्द्रष्टुः पूर्वं भयप्रदा ॥
ततोऽस्य न भयं किंचित्तद्वद्द्रष्टुरयं जनः ॥ ३०
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य वशं गताः ॥
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ ३१

मोक्षस्य न हि वासोऽस्ति न ग्रामान्तरमेव वा ॥
अज्ञानहृदयग्रन्थिनाशो मोक्ष इति स्मृतः ॥ ३२ ॥
वृक्षाग्रच्युतपादो यः स तदैव पतत्यधः ॥
तद्वज्ज्ञानवतो मुक्तिर्जायते निश्चितापि तु ॥ ३३ ॥
तीर्थे चाण्डालगेहे वा यदि वा नष्टचेतनः ॥
परित्यजन्देहमिमं ज्ञानादेव विमुच्यते ॥ ३४ ॥
संवीतो येन केनाश्नन्भक्ष्यं वाभक्ष्यमेव वा ॥
शयानो यत्र कुत्रापि सर्वात्मा मुच्यतेऽत्र सः ॥ ३५ ॥
क्षीरादुद्धृतमाज्यं तत्क्षिप्तं पयसि तत्पुनः ॥
न तेनैवैकतां याति संसारे ज्ञानवांस्तथा ॥ ३६ ॥
नित्यं पठति योऽध्यायमिमं राम शृणोति वा ॥
स मुच्यते देहबन्धादनायासेन राघव ॥ ३७ ॥
अतः संयतचित्तस्त्वं नित्यं पठ महीपते ॥
अनायासेन तेनैव सर्वथा मोक्षमाप्स्यसि ॥ ३८ ॥

॥ इति श्रीशिवगीतासु० मोक्षयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीराम उवाच ॥ भगवन्यदि ते रूपं सच्चिदानन्दविग्रहम् ॥
निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ॥ १ ॥
सर्वधर्मविहीनं च मनोवाचामगोचरम् ॥
सर्वव्यापितयात्मानमीक्षते सर्वतः स्थितम् ॥ २ ॥
आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परम् ॥
अमूर्तं सर्वभूतात्माकारं कारणकारणम् ॥ ३ ॥
यत्तददृश्यमग्राह्यं तद्ग्राह्यं वा कथं भवेत् ॥
अत्रोपायमजानानस्तेन खिन्नोऽस्मि शंकर ॥ ४ ॥
श्रीभगवानुवाच ॥ शृणु राजन्प्रवक्ष्यामि तत्रोपायं महाभुज ॥
सगुणोपासनाभिस्तु चित्तैकाग्र्यं विधाय च ॥ ५ ॥

स्थूलसौरांभिकान्यायात्तत्र चित्तं प्रवर्तयेत् ॥
तस्मिन्नन्नमये पिण्डे स्थूलदेहे तनूभृताम् ॥ ६ ॥
जन्मव्याधिजरामृत्युनिलये वर्तते दृढा ॥ ७ ॥
आत्मबुद्धिरहंमानात्कदाचिन्नैव हीयते ॥
आत्मा न जायते नित्यो म्रियते वा कथंचन ॥ ८ ॥
संजायतेऽस्ति विपरिणमते वर्धते तथा ॥
क्षीयते नश्यतीत्येते षड्भावा वपुषः स्मृताः ॥ ९ ॥
आत्मनो न विकारित्वं घटस्थनभसो यथा ॥
एवमात्मावपुस्तस्मादिति संचिन्तयेद्बुधः ॥ १० ॥
मूषानिक्षिप्तहेमाभः कोशः प्राणमयोऽत्र तु ॥
वर्ततेऽन्तरतो देहे बद्धः प्राणादिवायुभिः ॥ ११ ॥
कर्मेन्द्रियैः समायुक्तश्चलनादिक्रियात्मकः ॥
क्षुत्पिपासापराभूतो नायमात्मा जडो यतः ॥ १२ ॥
चिद्रूप आत्मा येनैव स्वदेहमभिपश्यति ॥
आत्मैव हि परं ब्रह्म निर्लेपः सुखनीरधिः ॥ १३ ॥
न तदश्नाति किंचैतत्तदश्नाति न कश्चन ॥ १४ ॥
ततः प्राणमये कोशे कोशोऽस्त्येव मनोमयः ॥
स संकल्पविकल्पात्मा बुद्धीन्द्रियसमायुतः ॥ १५ ॥
कामः क्रोधस्तथा लोभो मोहो मात्सर्यमेव च ॥
मदश्चेत्यरिषड्वर्गो ममतेच्छादयोऽपि च ॥
मनोमयस्य कोशस्य धर्मा एतस्य तत्र तु ॥ १६ ॥
या कर्मविषया बुद्धिर्वेदशास्त्रार्थनिश्चिता ॥
सा तु ज्ञानेन्द्रियैः सार्धं विज्ञानमयकोशतः ॥ १७ ॥
इह कर्तृत्वाभिमानी स एव तु न संशयः ॥
इहामुत्र गतिस्तस्य स जीवो व्यावहारिकः ॥ १८ ॥
व्योमादिसात्त्विकांशेभ्यो जायन्ते धीन्द्रियाणि तु ॥

व्योम्नः श्रोत्रं भुवो घ्राणं जलाज्जिह्वाथ तेजसः॥ १९ ॥
चक्षुर्वायोस्त्वगुत्पन्ना तेषां भौतिकता ततः ॥ २० ॥
व्यामोदीनां समस्तानां सात्त्विकांशेभ्य एव तु ॥
जायंते बुद्धिमनसी बुद्धिः स्यान्निश्चयात्मिका ॥ २१ ॥
वाक्पाणिपादपायूपस्थान कर्मेंद्रियाणि तु ॥
व्योमादीनां रजोंऽशेभ्यो व्यस्तेभ्यस्तान्यनुक्रमात् ।२२।
समस्तेभ्यो रजोंऽशेभ्यः पञ्च प्राणादिवायवः ॥
जायन्ते सप्तदशकमेवं लिङ्गशरीरकम् ॥ २३ ॥
एतल्लिंगशरीरं तु तप्तायःपिण्डवद्यतः ॥
परस्पराध्यासयोगात्साक्षिचैतन्यसंयुतम् ॥ २४ ॥
तदानन्दमयः कोशो भोक्तृत्वं प्रतिपद्यते ॥
विद्याकर्मफलादीनां भोक्तेहामुत्र स स्मृतः ॥ २५ ॥
यदाध्यासं विहायैष स्वस्वरूपेण तिष्ठति ॥
अविद्यामात्रसंयुक्तः साक्ष्यात्मा जायते तदा ॥ २६ ॥
द्रष्टान्तःकरणादीनामनुभूतेः स्मृतेरपि ॥
अतोऽन्तःकरणाध्यासादध्यासित्वेन चात्मनः ॥
भोक्तृत्वं साक्षिता चेति द्वैधं तस्योपपद्यते ॥ २७ ॥
आतपश्चापि तच्छाया तत्प्रकाशे विराजते ॥
एको भोजयिता तत्र भुङ्क्तेऽन्यः कर्मणः फलम् ॥ २८ ॥
क्षेत्रज्ञं रथिनं विद्धि शरीरं रथमेव तु ॥
बुद्धिं तु सारथिं विद्धि प्रग्रहं तु मनस्तथा ॥ २९ ॥
इन्द्रियाणि हयान्विद्धि विषयांस्तेषु गोचरान् ॥
इन्द्रियैर्मनसा युक्तं भोक्तारं विद्धि पूरुषम् ॥ ३० ॥
एवं शान्त्यादियुक्तः सन्नुपास्ते यः सदा द्विजः ॥
उद्घाट्योद्घाट्यैकमेकं यथैव कदलीतरोः ॥ ३१ ॥
वल्कलानि ततः पश्चाल्लभते सारमुत्तमम् ॥

तथैव पञ्चकोशेषु मनः संक्रामयन्क्रमात् ॥
तेषां मध्ये ततः सारमात्मानमपि विन्दति ॥ ३२ ॥
एवं मनः समाधाय संयतो मनसि द्विजः ॥
अथ प्रवर्तयेच्चित्तं निराकारे परात्मनि ॥ ३३ ॥
ततो मनः प्रगृह्णाति परमात्मानमव्ययम् ॥
यत्तदद्रेश्यमग्राह्यमस्थूलाद्युक्तिगोचरम् ॥ ३४ ॥
श्रीराम उवाच ॥ भगवञ्छ्रवणे नैव प्रवर्तन्ते जनाः कथम् ।
वेदशास्त्रार्थसंपन्ना यज्वानः सत्यवादिनः ॥ ३५ ॥
शृण्वन्तोऽपि तथात्मानं जानते नैव केचन ॥
ज्ञात्वापि मन्वते मिथ्या किमेतत्तव मायया ॥ ३६ ॥
श्रीभगवानुवाच ॥ एवमेव महाबाहो नात्र कार्या विचारणा ।
दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ ३७ ॥
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
अभक्ता ये महाबाहो मम श्रद्धाविवर्जिताः ॥ ३८ ॥
फलं कामयमानास्ते चैहिकामुष्मिकादिकम् ॥
क्षयिष्ण्वल्पं सातिशयं यतः कर्मफलं मतम् ॥ ३९ ॥
तदविज्ञाय कर्माणि ये कुर्वन्ति नराधमाः ॥
मातुः पतन्ति ते गर्भे मृत्योर्वक्त्रे पुनः पुनः ॥ ४० ॥
नानायोनिषु जातस्य देहिनो यस्यकस्यचित् ॥
कोटिजन्मार्जितैः पुण्यैर्मयि भक्तिः प्रजायते ॥ ४१ ॥
स एव लभते ज्ञानं मद्भक्तः श्रद्धयान्वितः ॥
नान्यकर्माणि कुर्वाणो जन्मकोटिशतैरपि ॥ ४२ ॥
ततः सर्वं परित्यज्य मद्भक्तिं समुदाहर ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥ ४३ ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ ४४ ॥

यत्तपस्यसि राम त्वं तत्कुरुष्व मदर्पणम् ॥
ततः परतरा नास्ति भक्तिर्मयि रघूत्तम ॥ ४५ ॥

॥ इति श्रीशिवगीतासु० पञ्चकोशोपपादनं नाम चतुर्दशोऽध्यायः ॥१४॥

---

श्रीराम उवाच ॥ भक्तिस्ते कीदृशी देव जायते वा कथंचन ॥
यया निर्वाणरूपं तु लभते मोक्षमुत्तमम् ॥
तद् ब्रूहि गिरिजाकान्त मयि तेऽनुग्रहो यदि ॥ १ ॥
श्रीभगवानुवाच ॥ यो वेदाध्ययनं यज्ञं दानानि विविधानि च ॥
मदर्पणधिया कुर्यात्स मे भक्तः स मे प्रियः ॥ २ ॥
नर्यभस्म समादाय विशुद्धं श्रोत्रियालयात् ॥
अग्निरित्यादिभिर्मन्त्रैरभिमन्त्र्य यथाविधि ॥ ३ ॥
उद्धूलयति गात्राणि तेन चार्चति मामपि ॥
तस्मात्परतरा भक्तिर्मम राम न विद्यते ॥ ४ ॥
सर्वदा शिरसा कण्ठे रुद्राक्षान्धारयेत्तु यः ॥
पञ्चाक्षरीजपरतः स मे भक्तः स मे प्रियः ॥ ५ ॥
भस्मच्छन्नो भस्मशायी सर्वदा विजितेन्द्रियः ॥
यस्तु रुद्रं जपेन्नित्यं चिन्तयेन्मामनन्यधीः ॥ ६ ॥
स तेनैव च देहेन शिवः संजायते स्वयम् ॥
जपेद्यो रुद्रसूक्तानि तथाथर्वशिरः परम् ॥ ७ ॥
कैवल्योपनिषत्सूक्तं श्वेताश्वतरमेव च ॥
ततः परतरो भक्तो मम लोके न विद्यते ॥ ८ ॥
अन्यत्र धर्मादन्यस्मादन्यत्रास्मात्कृताकृतात् ॥
अन्यत्र भूताद्भव्याच्च यत्प्रवक्ष्यामि तच्छृणु ॥ ९ ॥
वदन्ति यत्पदं वेदाः शास्त्राणि विविधानि च ॥
सर्वोपनिषदां सारं दध्नो घृतमिवोद्धृतम् ॥ १० ॥
यादिच्छन्तो ब्रह्मचर्यं चरन्ति मुनयः सदा ॥

तत्ते पदं संग्रहेण ब्रवीम्योमिति यत्पदम् ॥ ११ ॥
एतदेवाक्षरं ब्रह्म एतदेवाक्षरं परम् ॥
एतदेवाक्षरं ज्ञात्वा ब्रह्मलोके महीयते ॥ १२ ॥
छन्दसां यस्तु धेनूनामृषभत्वेन चोदितः ॥
इदमेव पतिः सेतुरमृतस्य च धारणात् ॥ १३ ॥
मेदसा पिहिते कोशे ब्रह्म यत्परमोमिति ॥ १४ ॥
चतस्रस्तस्य मात्राः स्युरकारोकारकौ तथा ॥
मकारश्चावसानेऽर्धमात्रेति परिकीर्तिता ॥ १५ ॥
पूर्वत्र भूश्च ऋग्वेदो ब्रह्माष्टवसवस्तथा ॥
गार्हपत्यश्च गायत्री गङ्गा प्रातःसवस्तथा ॥ १६ ॥
द्वितीया च भुवो विष्णू रुद्रोऽनुष्टुब्यजुस्तथा ॥
यमुनादक्षिणाग्निश्च माध्यन्दिनसवस्तथा ॥ १७ ॥
तृतीया च सुवः सामान्यादित्यश्च महेश्वरः ॥
अग्निराहवनीयश्च जगती च सरस्वती ॥ १८ ॥
तृतीयं सवनं प्रोक्तमथर्वत्वेन यन्मतम् ॥
चतुर्थी यावसानेऽर्धमात्रा सा सोमलोकगा ॥ १९ ॥
अथर्वाङ्गिरसः संवर्तकोऽग्निश्च महस्तथा ॥
विराट् सभ्यावसथ्यौ च शुतुद्रिर्यज्ञपुच्छकः ॥ २० ॥
प्रथमा रक्तवर्णा स्याद् द्वितीया भास्वरा मता ॥
तृतीया विद्युदाभा स्याच्चतुर्थी शुक्लवर्णिनी ॥ २१ ॥
सर्वं जातं जायमानं तदोङ्कारे प्रतिष्ठितम् ॥
विश्वं भूतं च भुवनं विचित्रं बहुधा तथा ॥ २२ ॥
जातं च जायमानं यत्तत्सर्वं रुद्र उच्यते ॥
तस्मिन्नेव पुनः प्राणाः सर्वमोङ्कार उच्यते ॥ २३ ॥
प्रविलीनं तदोङ्कारे परं ब्रह्म सनातनम् ॥
तस्मादोङ्कारजापी यः स मुक्तो नात्र संशयः ॥ २४ ॥

त्रेताग्नेः स्मार्तवह्नेर्वा शैवाग्नेर्वा समाहृतम् ॥
भस्माभिमन्त्र्य यो मां तु प्रणवेन प्रपूजयेत् ॥ २५ ॥
तस्मात्परतरो भक्तो मम लोके न विद्यते ॥ २६ ॥
शालाग्नेर्दाववह्नेर्वा भस्मादायाभिमन्त्रितम् ॥
यो विलिम्पति गात्राणि स शूद्रोऽपि विमुच्यते ॥२७॥
कुशपुष्पैर्बिल्वदलैः पुष्पैर्वा गिरिसंभवैः ॥
यो मामर्चयते नित्यं प्रणवेन प्रियो हि सः ॥ २८ ॥
पुष्पं फलं समूलं वा पत्रं सलिलमेव वा ॥
यो दद्यात्प्रणवैर्मह्यं तत्कोटिगुणितं भवेत् ॥ २९ ॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ॥
यस्यास्त्यध्ययनं नित्यं स मे भक्तः स मे प्रियः ॥३०॥
प्रदोषे यो मम स्थानं गत्वा पूजयते तु माम् ॥
स परां श्रियमाप्नोति पश्चान्मयि विलीयते ॥ ३१ ॥
अष्टम्यां च चतुर्दश्यां पर्वणोरुभयोरपि ॥
भूतिभूषितसर्वांगो यः पूजयति मां निशि ॥ ३२ ॥
कृष्णपक्षे विशेषेण स मे भक्तः स मे प्रियः ॥ ३३ ॥
एकादश्यामुपोष्यैव यः पूजयति मां निशि ॥
सोमवारे विशेषेण स मे भक्तो न नश्यति ॥ ३४ ॥
पञ्चामृतैः स्नापयेद्यः पञ्चगव्येन वा पुनः ॥
पुष्पोदकैः कुशजलैस्तस्मान्नान्यः प्रियो मम ॥ ३५ ॥
पयसा सर्पिषा वापि मधुनेक्षुरसेन वा ॥
पक्काम्रफलजेनापि नारिकेरजलेन वा ॥ ३६ ॥
गन्धोदकेन वा मां यो रुद्रमन्त्रं समुच्चरन् ॥
अभिषिञ्चेत्ततो नान्यः कश्चित्प्रियतरो मम ॥ ३७ ॥
आदित्याभिमुखो भूत्वा ऊर्ध्वबाहुर्जले स्थितः ॥
मां ध्यायन् रविबिम्बस्थमथर्वांगिरसं जपेत् ॥ ३८ ॥

प्रविशेन्मे शरीरेऽसौ गृहं गृहपतिर्यथा ॥
बृहद्रथन्तरं वामदेव्यं देवव्रतानि च ॥ ३९ ॥
तद्योगयाज्यदोहांश्च यो गायति ममाग्रतः ॥
इह श्रियं परां भुक्त्वा मम सायुज्यमाप्नुयात् ॥ ४०
ईशावास्यादि मन्त्रान् यो जपेन्नित्यं ममाग्रतः ॥
मत्सायुज्यमवाप्नोति मम लोके महीयते ॥ ४१ ॥
भक्तियोगो मया प्रोक्त एवं रघुकुलोद्भव ॥
सर्वकामप्रदो मत्तः किमन्यच्छ्रोतुमिच्छसि ॥ ४२

इति श्रीशिवगीतासु० भक्तियोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

॥ श्रीराम उवाच ॥ भगवन्मोक्षमार्गो यस्त्वया सम्यगुदाहृतः
तत्राधिकारिणं ब्रूहि तत्र मे संशयो महान् ॥ १ ॥
श्रीभगवानुवाच ॥ ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चात्राधिकारिणः
ब्रह्मचारी गृहस्थो वाऽनुपनीतोऽथवा द्विजः ॥ २ ॥
वनस्थो वाऽवनस्थो वा यतिः पाशुपतव्रती ॥
बहुनात्र किमुक्तेन यस्य भक्तिः शिवार्चने ॥ ३ ॥
स एवात्राधिकारी स्यान्नान्यचित्तः कथंचन ॥
जडोऽन्धो बधिरो मूको निःशौचः कर्मवर्जितः ॥ ४
अज्ञोपहासका भक्ता भूतिरुद्राक्षधारिणः ॥
लिंगिनो यश्च वा द्वेष्टि ते नैवात्राधिकारिणः ॥ ५ ॥
यो मां गुरुं पाशुपतं व्रतं द्वेष्टि धराधिप ॥
विष्णुं वा न स मुच्येत जन्मकोटिशतैरपि ॥ ६ ॥
अनेककर्मसक्तोऽपि शिवज्ञानविवर्जितः ॥
शिवभक्तिविहीनश्च संसारान्नैव मुच्यते ॥ ७ ॥
आसक्ताः फलरागेण ये त्ववैदिककर्मणि ॥
दृष्टमात्रफलास्ते तु न मुक्तावधिकारिणः ॥ ८ ॥

अविमुक्ते द्वारकायां श्रीशैले पुण्डरीकके ॥
देहान्ते तारकं ब्रह्म लभते मदनुग्रहात् ॥ ९ ॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ १० ॥
विप्रस्यानुपनीतस्य विधिरेवमुदाहृतः ॥
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥ ११ ॥
स शूद्रेण समस्तावद्यावद्वेदान्न जायते ॥
नामसंकीर्तने ध्याने सर्व एवाधिकारिणः ॥ १२ ॥
संसारान्मुच्यते जन्तुः शिवतादात्म्यभावनात् ॥
तथा दानं तपो वेदाध्ययनं चान्यकर्म वा ॥
सहस्रांशं तु नार्हन्ति सर्वदा ध्यानकर्मणः ॥ १३ ॥
जातिमाश्रममङ्गानि देशं कालमथापि वा ॥
आसनादीनि कर्माणि ध्यानं नापेक्षते क्वचित् ॥ १४ ॥
गच्छंस्तिष्ठन् जपन्वापि शयानो वान्यकर्मणि ॥
पातकेनापि वा युक्तो ध्यानादेव विमुच्यते ॥ १५ ॥
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ॥
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ १६ ॥
आश्चर्ये वा भये शोके क्षुते वा मम नाम यः ॥
व्याजेनापि स्मरेद्यस्तु स याति परमां गतिम् ॥ १७ ॥
महापापैरपि स्पृष्टो देहान्ते यस्तु मां स्मरेत् ॥
पञ्चाक्षरीं वोच्चरति स मुक्तो नात्र संशयः ॥ १८ ॥
विश्वं शिवमयं यस्तु पश्यत्यात्मानमात्मना ॥
तस्य क्षेत्रेषु तीर्थेषु किं कार्यं वान्यकर्मसु ॥ १९ ॥
सर्वेण सर्वदा कार्यं भूतिरुद्राक्षधारणम् ॥
युक्तेनाथाप्ययुक्तेन शिवभक्तिमभीप्सता ॥ २० ॥
नर्यभस्मसमायुक्तो रुद्राक्षान्यस्तु धारयेत् ॥

महापापैरपि स्पृष्टो मुच्यते नात्र संशयः ॥ २१ ॥
अन्यानि शैवकर्माणि करोतु न करोतु वा ॥
शिवनाम जपेद्यस्तु सर्वदा मुच्यते तु सः ॥ २२ ॥
अन्तकाले तु रुद्राक्षान्विभूतिं धारयेत्तु यः ॥
महापापोपपापौघैरपि स्पृष्टो नराधमः ॥ २३ ॥
सर्वथा नोपसर्पन्ति तं जनं यमकिंकराः ॥ २४ ॥
बिल्वमूलमृदा यस्तु शरीरमुपलिम्पति ॥
अन्तकालेऽन्तकजनैः स दूरीक्रियते नरः ॥ २५ ॥
श्रीराम उवाच ॥ भगवन्पूजितः कुत्र कुत्र वा त्वं प्रसीदसि
त ब्रूहि मम जिज्ञासा वर्तते महती विभो ॥ २६ ॥
श्रीभगवानुवाच ॥ मृदा वा गोमयेनापि भस्मना चन्दनेन वा
सिकताभिर्दारुणा वा पाषाणेनापि निर्मिता ॥ २७
लोहेन वाथ रङ्गेण कांस्यखर्परापित्तलैः ॥
ताम्ररौप्यसुवर्णैर्वा रत्नैर्नानाविधैरपि ॥ २८ ॥
अथवा पारदेनैव कर्पूरेणाथवा कृता ॥
प्रतिमा शिवलिङ्गं वा द्रव्यैरेतैः कृतं तु यत् ॥ २९
तत्र मां पूजयेत्तेषु फलं कोटिगुणोत्तरम् ॥ ३० ॥
मृदारुकांस्यलोहैश्च पाषाणेनापि निर्मिता ॥
गृहिणा प्रतिमा कार्या शिवं शश्वदभीप्सता ॥
आयुः श्रियं कुलं धर्मं पुत्रानाप्नोति तैः क्रमात् ॥ ३१
बिल्ववृक्षे तत्फले वा यो मां पूजयते नरः ॥
परां श्रियमिह प्राप्य मम लोके महीयते ॥ ३२ ॥
बिल्ववृक्षं समाश्रित्य यो मन्त्रान्विधिना जपेत् ॥
एकेन दिवसेनैव तत्पुरश्चरणं भवेत् ॥ ३३ ॥
यस्तु बिल्ववने नित्यं कुटीं कृत्वा वसेन्नरः ॥
सर्वे मन्त्राः प्रसिद्ध्यन्ति जपमात्रेण केवलम् ॥ ३४

पर्वताग्रे नदीतीरे बिल्वमूले शिवालये ॥
अग्निहोत्रे केशवस्य संनिधौ वा जपेत्तु यः ॥ ३५ ॥
नैवास्य विघ्नं कुर्वन्ति दानवा यक्षराक्षसाः ॥
तं न स्पृशंति पापानि शिवसायुज्यमृच्छति ॥ ३६ ॥
स्थण्डिले वा जले वह्नौ वायावाकाश एव वा ॥
गिरौ स्वात्मनि वा यो मां पूजयेत्प्रयतो नरः ॥३७॥
स कृत्स्नं फलमाप्नोति लवमात्रेण राघव ॥
आत्मपूजासमा नास्ति पूजा रघुकुलोद्भव ॥ ३८ ॥
मत्सायुज्यमवाप्नोति चण्डालोऽप्यात्मपूजया ॥
सर्वान्कामानवाप्नोति मनुष्यः कम्बलासने ॥ ३९ ॥
कृष्णाजिने भवेन्मुक्तिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥
कुशासने भवेज्ज्ञानमारोग्यं पत्रनिर्मिते ॥ ४० ॥
पाषाणे दुःखमाप्नोति काष्ठे नानाविधान् गदान् ॥
वस्त्रेण श्रियमाप्नोति भूमौ मन्त्रो न सिद्ध्यति ॥
प्राङ्मुखोदङ्मुखो वापि जपं पूजां समाचरेत् ॥ ४१ ॥
अक्षमालाविधिं वक्ष्ये शृणुष्वावहितो नृप ॥ ४२ ॥
साम्राज्यं स्फाटिके स्यात्तु पुत्रजीवे परां श्रियम् ॥
आत्मज्ञानं कुशग्रन्थौ रुद्राक्षः सर्वकामदः ॥ ४३ ॥
प्रवालैश्च कृता माला सर्वलोकवशप्रदा ॥
मोक्षप्रदा च माला स्यादामलक्याः फलैः कृता ॥४४॥
मुक्ताफलैः कृता माला सर्वविद्याप्रदायिनी ॥
माणिक्यरचिता माला त्रैलोक्यस्य वशंकरी ॥ ४५ ॥
नीलैर्मरकतैर्वापि कृता शत्रुभयप्रदा ॥
सुवर्णरचिता माला दद्याद्वै महतीं श्रियम् ॥ ४६ ॥
तथा रौप्यमयी माला कन्यां यच्छति कामिताम् ॥
उक्तानां सर्वकामानां दायिनी पारदैः कृता ॥ ४७ ॥

अष्टोत्तरशता माला तत्र स्यादुत्तमोत्तमा ॥
शतसंख्योत्तमा माला पञ्चाशन्मध्यमा मता ॥ ४८ ॥
चतुः पञ्चशती यद्वा अधमा सप्तविंशतिः ॥
अधमा पञ्चविंशत्या यदि स्याच्छतनिर्मिता ॥ ४९ ॥
पञ्चाशदक्षराण्यत्रानुलोमप्रातिलोमतः ॥
इत्येवं स्थापयेत्स्पष्टं न कस्मैचित्प्रदर्शयेत् ॥ ५० ॥
वर्णैर्विन्यस्तया यस्तु क्रियते मालया जपः ॥
एकवारेण तस्यैव पुरश्चर्या कृता भवेत् ॥ ५१ ॥
सव्यपार्ष्णि गुदे स्थाप्य दक्षिणं च ध्वजोपरि ॥
योनिमुद्रावन्ध एष भवेदासनमुत्तमम् ॥ ५२ ॥
योनिमुद्रासने स्थित्वा प्रजपेद्यः समाहितः ॥
यं कंचिदपि वा मन्त्रं तस्य स्युः सर्वसिद्धयः ॥ ५३ ॥
छिन्ना रुद्धाः स्तम्भिताश्च मिलिता मूर्छितास्तथा ॥
सुप्ता मत्ता हीनवीर्या दग्धास्त्रस्तारिपक्षगाः ॥ ५४ ॥
बाला यौवनमत्ताश्च वृद्धा मन्त्राश्च ये मताः ॥
योनिमुद्रासने स्थित्वा मन्त्रानेवंविधान् जपेत् ॥५५॥
तस्य सिद्ध्यन्ति ते मन्त्रा नान्यस्य तु कथंचन ॥
ब्राह्मं मुहूर्तमारभ्यामध्याह्नं प्रजपेन्मनुम् ॥ ५६ ॥
अत ऊर्ध्वं कृते जाप्ये विनाशाय भवेद्ध्रुवम् ॥
पुरश्चर्याविधावेवं सर्वकाम्यफलेष्वपि ॥ ५७ ॥
नित्ये नैमित्तिके वापि तपश्चर्यासु वा पुनः ॥
सर्वदैव जपः कार्यो न दोषस्तत्र कश्चन ॥ ५८ ॥
यस्तु रुद्रं जपेन्नित्यं ध्यायमानो ममाकृतिम् ॥
षडक्षरं वा प्रणवं निष्कामो विजितेन्द्रियः ॥ ५९ ॥
तथाथर्वशिरोमन्त्रं कैवल्यं वा रघूत्तम ॥
स तेनैव च देहेन शिवः संजायते स्वयम् ॥ ६० ॥

अधीते शिवगीतां यो नित्यमेतां जितेन्द्रियः ॥
शृणुयाद्वा स मुक्तः स्यात्संसारान्नात्र संशयः ॥ ६१ ॥
सूत उवाच ॥एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ॥
रामः कृतार्थमात्मानममन्यत तथैव सः ॥ ६२ ॥
एवं मया समासेन शिवगीता समीरिता ॥
एतां यः प्रजपेन्नित्यं शृणुयाद्वा समाहितः ॥ ६३ ॥
एकाग्रचित्तो यो मर्त्यस्तस्य मुक्तिः करे स्थिता ॥
अतः शृणुध्वं मुनयो नित्यमेतां समाहिताः ॥ ६४ ॥
अनायासेन वो मुक्तिर्भविता नात्र संशयः ॥
कायक्लेशो मनःक्षोभो धनहानिर्न चात्मनः ॥ ६५ ॥
पीडास्ति श्रवणादेव यस्मात्कैवल्यमाप्नुयात् ॥
शिवगीतामतो नित्यं शृणुध्वमृषिसत्तमाः ॥ ६६ ॥
ऋषय ऊचुः ॥ अद्यप्रभृति नः सूत त्वमाचार्यः पिता गुरुः ॥
अविद्यायाः परं पारं यस्मात्तारयितासि नः ॥ ६७ ॥
उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ॥
तस्मात्सूतात्मज त्वत्तः सत्यं नान्योऽस्ति नो गुरुः॥६८॥
व्यास उवाच ॥ इत्युक्त्वा प्रययुः सर्वे सायंसन्ध्यामुपासितुम् ॥
स्तुवन्तः सूतपुत्रं ते संतुष्टा गोमतीतटम् ॥ ६९ ॥
॥ इति श्रीशिवगीतासु० गीताधिकारिनिरूपणं नाम षोडशोऽध्यायः ॥१६॥

॥ इति श्रीमच्छिवगीता समाप्ता ॥

---

॥ ॐ नमः श्रीदेव्यै ॥



॥ श्रीगणेशाय नमः ॥

अथ श्रीमद्देवीगीता प्रारभ्यते ।



हिमालय उवाच ॥ योगं च भक्तिसहितं ज्ञानं च श्रुतिसंमतम् ॥
वदस्व परमेशानि त्वमेवाहं यतो भवेः ॥
व्यास उवाच ॥ इति तस्य वचः श्रुत्वा प्रसन्नमुखपंकजा ॥
वक्तुमारभताम्बा सा रहस्यं श्रुतिगूहितम् ॥

---

देव्युवाच ॥ शृण्वन्तु निर्जराः सर्वे व्याहरन्त्या वचो मम ॥
यस्य श्रवणमात्रेण मद्रूपत्वं प्रपद्यते ॥ १ ॥
अहमेवास पूर्वं मे नान्यत्किंचिन्नगाधिप ॥
तदात्मरूपं चित्संवित्परब्रह्मैकनामकम् ॥ २ ॥
अप्रतर्क्यमनिर्देश्यमनौपम्यमनामयम् ॥
तस्य काचित्स्वतःसिद्धा शक्तिर्मायेति विश्रुता ॥ ३ ॥
न सती सा नासती सा नोभयात्मा विरोधतः ॥
एतद्विलक्षणा काचिद्वस्तुभूताऽस्ति सर्वदा ॥ ४ ॥
पावकस्योष्णतेवेयमुष्णांशोरिव दीधितिः ॥
चंद्रस्य चंद्रिकेवेयं ममेयं सहजा ध्रुवा ॥ ५ ॥
तस्यां कर्माणि जीवानां जीवाः कालाश्च संचरे ॥
अभेदेन विलीनाः स्युः सुषुप्तौ व्यवहारवत् ॥ ६ ॥
स्वशक्तेश्च समायोगादहं बीजात्मतां गता ॥
स्वधारावरणात्तस्या दोषत्वं च समागतम् ॥ ७ ॥

चैतन्यस्य समायोगान्निमित्तत्वं च कथ्यते ॥
प्रपंचपरिणामाच्च समवायित्वमुच्यते ॥ ८ ॥
केचित्तां तप इत्याहुस्तमः केचिज्जडं परे ॥
ज्ञानं माया प्रधानं च प्रकृतिं शक्तिमप्यजाम् ॥ ९ ॥
विमर्श इति तां प्राहुः शैवशास्त्रविशारदाः ॥
अविद्यामितरे प्राहुर्वेदतत्त्वार्थचिन्तकाः ॥ १० ॥
एवं नानाविधानि स्युर्नामानि निगमादिषु ॥
तस्याजडत्वं दृश्यत्वाज्ज्ञाननाशात्ततोऽसती ॥ ११ ॥
चैतन्यस्य न दृश्यत्वं दृश्यत्वे जडमेव तत् ॥
स्वप्रकाशं च चैतन्यं न परेण प्रकाशितम् ॥ १२ ॥
अनवस्थादोषसत्त्वान्न स्वेनापि प्रकाशितम् ॥
कर्मकर्तृविरोधः स्यात्तस्मात्तद्दीपवत्स्वयम् ॥ १३ ॥
प्रकाशमानमन्येषां भासकं विद्धि पर्वत ॥
अत एव च नित्यत्वं सिद्धं संवित्तनोर्मम ॥ १४ ॥
जाग्रत्स्वप्नसुषुप्त्यादौ दृश्यस्य व्यभिचारतः ॥
संविदो व्यभिचारश्च नानुभूतोऽस्ति कर्हिचित् ॥१
यदि तस्याप्यनुभवस्तर्ह्ययं येन साक्षिणा ॥
अनुभूतः स एवात्र शिष्टः संविद्वपुः पुरा ॥ १६ ॥

अत एव च नित्यत्वं प्रोक्तं सच्छास्त्रकोविदैः ॥
आनन्दरूपता चास्याः परप्रेमास्पदत्वतः ॥ १७ ॥
मा न भूवं हि भूयासमिति प्रेमात्मनि स्थितम् ॥
सर्वस्यान्यस्य मिथ्यात्वादसंगत्वं स्फुटं मम ॥ १८ ॥
अपरिच्छिन्नताप्येवमत एव मता मम ॥
तच्च ज्ञानं नात्मधर्मो धर्मत्वे जडताऽऽत्मनः ॥ १९ ॥
ज्ञानस्य जडशेषत्वं न दृष्टं न च संभावि ॥
चिद्धर्मत्वं तथा नास्ति चितश्चिन्न हि भिद्यते ॥ २० ॥
तस्मादात्मा ज्ञानरूपः सुखरूपश्च सर्वदा ॥
सत्यः पूर्णोऽप्यसंगश्च द्वैतजालविवर्जितः ॥ २१ ॥
स पुनः कामकर्मादियुक्तया स्वीयमायया ॥
पूर्वानुभूतसंस्कारात्कालकर्मविपाकतः ॥ २२ ॥
अविवेकाच्च तत्त्वस्य सिसृक्षावान्प्रजायते ॥
अबुद्धिपूर्वः सर्गोऽयं कथितस्ते नगाधिप ॥ २३ ॥
एतद्धि यन्मया प्रोक्तं मम रूपमलौकिकम् ॥
अव्याकृतं तदव्यक्तं मायाशबलमित्यपि ॥ २४ ॥
प्रोच्यते सर्वशास्त्रेषु सर्वकारणकारणम् ॥
तत्त्वानामादिभूतं च सच्चिदानन्दविग्रहम् ॥ २५ ॥
सर्वकर्मघनीभूतमिच्छाज्ञानक्रियाश्रयम् ॥
ह्रींकारमंत्रवाच्यं तदादितत्त्वं तदुच्यते ॥ २६ ॥
तस्मादाकाश उत्पन्नः शब्दतन्मात्ररूपकः ॥
भवेत्स्पर्शात्मको वायुस्तेजो रूपात्मकं पुनः ॥ २७ ॥
जलं रसात्मकं पश्चात्ततो गन्धात्मिका धरा ॥
शब्दैकगुण आकाशो वायुः स्पर्शरवान्वितः ॥ २८ ॥
शब्दस्पर्शरूपगुणं तेज इत्युच्यते बुधैः ॥
शब्दस्पर्शरूपरसैरापो वेदगुणाः स्मृताः ॥ २९ ॥

शब्दस्पर्शरूपरसगन्धैः पंचगुणा धरा ॥
तेभ्योऽभवन्महत्सूत्रं यल्लिंगं परिचक्षते ॥ ३० ॥
सर्वात्मकं तत्संप्रोक्तं सूक्ष्मदेहोऽयमात्मनः ॥
अव्यक्तं कारणो देहः स चोक्तः पूर्वमेव हि ॥ ३१
यस्मिञ्जगद्बीजरूपं स्थितं लिंगोद्भवो यतः ॥
ततः स्थूलानि भूतानि पंचीकरणमार्गतः ॥ ३२ ॥
पंच संख्यानि जायन्ते तत्प्रकारस्त्वथोच्यते ॥
पूर्वोक्तानि च भूतानि प्रत्येकं विभजेद्द्विधा ॥ ३३
एकैकं भागमेकस्य चतुर्धा विभजेद्गिरे ॥
स्वस्वेतरद्वितीयांशे योजनात्पंच पंच ते ॥ ३४ ॥
तत्कार्यं च विराड् देहः स्थूलदेहोऽयमात्मनः ॥
पंचभूतस्थसत्त्वांशैः श्रोत्रादीनां समुद्भवः ॥ ३५ ॥
ज्ञानेंद्रियाणां राजेंद्र प्रत्येकं मीलितैस्तु तैः ॥
अंतःकरणमेकं स्याद्वृत्तिभेदाच्चतुर्विधम् ॥ ३६ ॥
यदा तु संकल्पविकल्पकृत्यं तदा भवेत्तन्मन इत्यभि
स्याद्बुद्धिसंज्ञं च यदा प्रवेत्ति सुनिश्चितं संशयहीनरू
अनुसन्धानरूपं तच्चित्तं च परिकीर्तितम् ॥
अहंकृत्याऽऽत्मवृत्त्या तु तदहंकारतां गतम् ॥ ३८
तेषां रजोंऽशैर्जातानि क्रमात्कर्मेंद्रियाणि च ॥
प्रत्येकं मीलितैस्तैस्तु प्राणो भवति पंचधा ॥ ३९ ॥
हृदि प्राणो गुदेऽपानो नाभिस्थस्तु समानकः ॥
कंठदेशेप्युदानः स्याद्व्यानः सर्वशरीरगः ॥ ४० ॥
ज्ञानेंद्रियाणि पंचैव पंच कर्मेंद्रियाणि च ॥
प्राणादि पंचकं चैव धिया च सहितं मनः ॥ ४१
एतत्सूक्ष्मशरीरं स्यान्मम लिंगं यदुच्यते ॥
तत्र या प्रकृतिः प्रोक्ता सा राजन्द्विविधा स्मृता ॥४

भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिष्विह निद्रया ॥
लीनेष्वसति यस्तत्र विनिद्रो निरहंक्रियः ॥ १४ ॥
मन्यमानस्तदात्मानमनष्टो नष्टवन्मृषा ॥
नष्टेऽहंकरणे द्रष्टा नष्टवित्त इवातुरः ॥ १५ ॥
एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते ॥
साहंकारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ॥ १६ ॥
देवहूतिरुवाच ॥ पुरुषं प्रकृतिर्ब्रह्मन्न विमुंचति कर्हिचित् ॥
अन्योन्यापाश्रयत्वाच्च नित्यत्वादनयोः प्रभो ॥ १७
यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः ॥
अपां रसस्य च यथा तथा बुद्धेः पदस्य च ॥ १८
अकर्तुः कर्मबंधोऽयं पुरुषस्य यदाश्रयः ॥
गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ॥ १९ ॥
क्वचित्तत्त्वावमर्शेन निवृत्तं भयमुल्बणम् ॥
अनिवृत्तनिमित्तत्वात्पुनः प्रत्यवतिष्ठते ॥ २० ॥
श्रीभगवानुवाच ॥ अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना ॥
तीव्रया मयि भक्त्या च श्रुतसंभृतया चिरम् ॥ २१
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ॥
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥ २२ ॥
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ॥
तिरोभवित्री शनैरग्नेर्योनिरिवारणिः ॥ २३ ॥
भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ॥
नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥ २४
यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ॥
स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ २५ ॥
एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् ॥
युंजतो नापकुरुत आत्मारामस्य कर्हिचित् ॥ २६

यदैवमध्यात्मरतः कालेन बहुजन्मना ॥
सर्वत्र जातवैराग्य आब्रह्मभवनान्मुनिः ॥ २७ ॥
मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा ॥
निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् ॥ २८ ॥
प्राप्नोतीहांजसा धीरः स्वदृशा छिन्नसंशयः ॥
यद्गत्वा न निवर्तेत योगी लिंगाद्विनिर्गमे ॥ २९ ॥
यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेऽङ्ग ॥ अनन्यहेतुष्वथ मे गतिः स्यादात्यन्तिकी यत्र न मृत्युहासः ॥ ३० ॥

इति श्रीमद्भागवते कपिलगीतायां तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीभगवानुवाच ॥ योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ॥
मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥ १ ॥
स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम् ॥
दैवाल्लब्धेन संतोष आत्मविच्चरणार्चनम् ॥ २ ॥
ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा ॥
मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम् ॥ ३ ॥
अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ॥
ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥ ४ ॥
मौनं सदासनजयः स्थैर्यं प्राणजयः शनैः ॥
प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि ॥ ५ ॥
स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ॥
वैकुंठलीलाभिध्यानं समाधानं तथात्मनः ॥ ६ ॥
एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम् ॥
बुद्ध्या युंजीत शनकैर्जितप्राणो ह्यतन्द्रितः ॥ ७ ॥
शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम् ॥

तस्मिन्स्वस्ति समासीन ऋजुकायः समभ्यसेत् ॥ ८॥
प्राणस्य शोधयेन्मार्गं पूरकुंभकरेचकैः ॥
प्रतिकूलेन वा चित्तं यथा स्थिरमचंचलम् ॥ ९ ॥
मनोऽचिरात्स्याद्विरजं जितश्वासस्य योगिनः ॥
वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् ॥१०॥
प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषान् ॥
प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ११ ॥
यदा मनः स्वं विरजं योगेन सुसमाहितम् ॥
काष्ठां भगवतो ध्यायेत्स्वनासाग्रावलोकनः १२ ॥
प्रसन्नवदनांभोजं पद्मगर्भारुणेक्षणम् ॥
नीलोत्पलदलश्यामं शंखचक्रगदाधरम् ॥ १३ ॥
लसत्पंकजकिंजल्कपीतकौशेयवाससम् ॥
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकंधरम् ॥ १४ ॥
मत्तद्विरेफकलया परीतं वनमालया ॥
परार्ध्यहारवलयकिरीटांगदनूपुरम् ॥ १५ ॥
कांचीगुणोल्लसच्छ्रोणिं हृदयांभोजविष्टरम् ॥
दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥ १६ ॥
अपीच्यदर्शनं शश्वत्सर्वलोकनमस्कृतम् ॥
सन्तं वयसि कैशोरे भृत्यानुग्रहकातरम् ॥ १७ ॥
कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् ॥
ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः ॥ १८ ॥
स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् ॥
प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥
तस्मिँल्लब्धपदं चित्तं सर्वावयवसंस्थितम् ॥
विलक्ष्यैकत्र संयुज्यादंगे भगवतो मुनिः ॥ २० ॥
संचिन्तयेद्भगवतश्चरणारविन्दं वज्रांकुशध्वजसरोरुहल

छनाढ्यम् ॥ उत्तुंगरक्तविलसन्नखचक्रवालज्योत्स्नाभि-
राहतमहद्धृदयांधकारम् ॥ २१ ॥
यच्छौचानिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन
शिवः शिवोऽभूत् ॥ ध्यातुर्मनःशमलशैलनिसृष्टवज्रं ध्या-
येच्चिरं भगवतश्चरणारविन्दम् ॥ २२ ॥
जानुद्वयं जलजलोचनया जनन्या लक्ष्म्याखिलस्य
सुरवन्दितया विधातुः ॥ ऊर्वोर्निधाय करपल्लवरोचिषा
यत्संलालितं हृदि विभोरभवस्य कुर्यात् ॥ २३ ॥
ऊरू सुपर्णभुजयोरधिशोभमानावोजोनिधी अतसिका-
कुसुमावभासौ ॥ व्यालंबिपीतवरवाससि वर्तमान-
कांचीकलापपरिरंभि नितंबबिंबम् ॥ २४ ॥
नाभिह्रदं भुवनकोशगुहोदरस्थं यत्रात्मयोनिधिषणा-
खिललोकपद्मम् ॥ व्यूढं हरिन्मणिवृषस्तनयोरमुष्य
ध्यायेद्द्वयं विशदहारमयूखगौरम् ॥ २५ ॥
वक्षोधिवासमृषभस्य महाविभूतेः पुंसां मनोनयन-
निर्वृतिमादधानम् ॥ कंठं च कौस्तुभमणेरधिभूषणार्थं
कुर्यान्मनस्यखिललोकनमस्कृतस्य ॥ २६ ॥
बाहूंश्च मन्दरगिरेः परिवर्तनेन निर्णिक्तबाहुवलया-
नधिलोकपालान् ॥ संचिन्तयेद्दशशतारमसह्यतेजः
शंखं च तत्करसरोरुहराजहंसम् ॥ २७ ॥
कौमोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभट-
शोणितकर्दमेन ॥ मालां मधुव्रतवरूथगिरोपघुष्टां
चैत्यस्य तत्त्वममलं मणिमस्य कंठे ॥ २८ ॥
भृत्यानुकंपितधियेह गृहीतमूर्तेः संचिन्तयेद्भगवतो
वदनारविंदम् ॥ यद्विस्फुरन्मकरकुंडलवल्गितेन वि-
द्योतितामलकपोलमुदारनासम् ॥ २९ ॥

यच्छ्रीनिकेतमलिभिः परिसेव्यमानं भूत्या स्व
कुटिलकुन्तलवृन्दजुष्टम् ।। मीनद्वयाश्रयमधिक्षिपदब्जने
ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रु ।। ३० ।।
तस्यावलोकमधिकं कृपयातिघोरतापत्रयोपशमना
विसृष्टमक्ष्णोः ।। स्निग्धस्मितानुगुणितं विपुलप्रसा
ध्यायेच्चिरं विपुलभावनया गुहायाम् ।। ३१ ।।
हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशो
षणमत्युदारम् ।। संमोहनाय रचितं निजमायया
भ्रूमंडलं मुनिकृते मकरध्वजस्य ।। ३२ ।।
ध्यानायनं प्रहसितं बहुलाधरोष्ठभासारुणायितत
द्विजकुन्दपंक्ति ।। ध्यायेत्स्वदेहकुहरेऽवसितस्य विष्णो
र्भक्त्यार्द्रयार्पितमना न पृथग्दिदृक्षेत् ।। ३३ ।।
एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृद
उत्पुलकः प्रमोदात् ।। औत्कंठ्यबाष्पकलया मुहु
रर्द्यमानस्तच्चापि चित्तबडिशं शनकैर्वियुंक्ते ।। ३४ ।।
मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति म
सहसा यथार्चिः ।। आत्मानमत्र पुरुषो व्यवधानमे
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ।। ३५ ।।
सोऽप्येतया चरमया मनसो निवृत्त्या तस्मिन्महिम्न्य
वसितः सुखदुःखबाह्ये ।। हेतुत्वमप्यसति कर्तरि दुःख
योर्यत्स्वात्मन्विधत्त उपलब्धपरात्मकाष्ठः ।। ३६ ।।
देहं च तं न चरमः स्थितमुत्थितं वा सिद्धोऽपि प
श्यति यतोऽध्यगमत्स्वरूपम् ।। दैवादुपेतमथ दैववशा
दपेतं वासो यथा परिकृतं मदिरामदान्धः ।। ३७ ।।
देहोऽपि दैववशगः खलु कर्म यावत्स्वारंभकं प्रति
मीक्षत एव सासुः ।। तं सप्रपंचमधिरूढसमाधियो

स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ३८ ॥
यथा पुत्राच्च वित्ताच्च पृथङ्‌ मर्त्यः प्रतीयते ॥
अप्यात्मत्वेनाभिमताद्देहादेः पुरुषस्तथा ॥ ३९ ॥
यथोल्मुकाद्विस्फुलिंगाद्धूमाद्वापि स्वसंभवात् ॥
अप्यात्मत्वेनाभिमताद्यथाग्निः पृथगुल्मुकात् ॥ ४० ॥
भूतेन्द्रियान्तःकरणात्प्रधानाज्जीवसंज्ञितात् ॥
आत्मा तथा पृथग्द्रष्टा भगवान्ब्रह्मसंज्ञितः ॥ ४१ ॥
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥
ईक्षेतानन्यभावेन भूतेष्विव तदात्मताम् ॥ ४२ ॥
स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते ॥
योनीनां गुणवैषम्यात्तथात्मा प्रकृतौ स्थितः ॥ ४३ ॥
तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम् ॥
दुर्विभाव्यां पराभाव्यस्वरूपेणावतिष्ठते ॥ ४४ ॥
इति श्रीमद्भागवते कपिलगीतायां चतुर्थोऽध्यायः ॥ ४ ॥

---

देवहूतिरुवाच ॥ लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ॥
स्वरूपं लक्ष्यतेऽमीषां येन तत्पारमार्थिकम् ॥ १ ॥
यथा सांख्येषु कथितं यन्मूलं तत्प्रचक्षते ॥
भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो ॥ २ ॥
विरागो येन पुरुषो भगवन्सर्वतो भवेत् ॥
आचक्ष्व जीवलोकस्य विविधा मम संसृतीः ॥ ३ ॥
कालस्येश्वररूपस्य परेषां च परस्य ते ॥
स्वरूपं बत कुर्वन्ति यद्धेतोः कुशलं जनाः ॥ ४ ॥
लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यना-
श्रये ॥ श्रान्तस्य कर्मस्वनुविद्धया धिया त्वमाविरासीः
किल योगभास्करः ॥ ५ ॥

मैत्रेय उवाच ॥ इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः ॥
आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणार्दितः ॥ ६ ॥
श्रीभगवानुवाच ॥ भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते
स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥ ७ ॥
अभिसंधाय यो हिंसां दंभं मात्सर्यमेव वा ॥
संरंभी भिन्नदृग्भावं मयि कुर्यात्स तामसः ॥ ८ ॥
विषयानभिसंधाय यश ऐश्वर्यमेव वा ॥
अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥ ९ ॥
कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ॥
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ १०
मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ॥
मनोगतिरविच्छिन्ना यथा गंगांभसोऽम्बुधौ ॥ ११
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ॥
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ १२ ॥
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ १३
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ॥
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥ १४ ॥
निषेवितेनानिमित्तेन स्वधर्मेण महीयसा ॥
क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥ १५
मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः ॥
भूतेषु मद्भावनया सत्त्वेनासंगमेन च ॥ १६ ॥
महतां बहुमानेन दीनानामनुकंपया ॥
मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च ॥ १७ ॥
आध्यात्मिकानुश्रवणान्नामसंकीर्तनाच्च मे ॥
आर्जवेनार्यसंगेन निरहंक्रियया तथा ॥ १८ ॥

मद्धर्मणो गुणैरेतैः परिसंशुद्ध आशयः ॥
पुरुषस्यांजसाभ्येति श्रुतमात्रगुणं हि माम् ॥ १९ ॥
यथा वातरथो घ्राणमावृंक्ते गन्ध आशयात् ॥
एवं योगरतं चेत आत्मानमविकारि यत् ॥ २० ॥
अहं सर्वेषु भूतेषु भूतात्मावस्थितः सदा ॥
तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडंबनम् ॥ २१ ॥
यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् ॥
हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥ २२ ॥
द्विषतः परकाये मां मानिनो भिन्नदर्शिनः ॥
भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥ २३ ॥
अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे ॥
नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥ २४ ॥
अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् ॥
यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ २५ ॥
आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ॥
तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥ २६ ॥
अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ॥
अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा ॥ २७ ॥
जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ॥
ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ॥ २८ ॥
तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ॥
तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥
रूपभेदविदस्तत्र ततश्चोभयतोदतः ॥
तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥
ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ॥
ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥

अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान्स्वकर्मकृत् ॥
मुक्तसंगस्ततो भूयानदोग्धा धर्ममात्मनः ॥ ३२ ॥
तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः ॥
मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः ॥
न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥
मनसैतानि भूतानि प्रणमेद्बहु मानयन् ॥
ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥
भक्तियोगश्च योगश्च मया मानव्युदीरितः ॥
ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥
एतद्भगवतो रूपं ब्रह्मणः परमात्मनः ॥
परं प्रधानं पुरुषं दैवं कर्म विचेष्टितम् ॥ ३६ ॥
रूपभेदास्पदं दिव्यं काल इत्यभिधीयते ॥
भूतानां महदादीनां यतो भिन्नदृशां भयम् ॥ ३७ ॥
योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः ॥
स विष्ण्वाख्योऽधियज्ञोऽसौ कालः कलयतां प्रभुः ॥३८॥
न चास्य कश्चिद्दयितो न द्वेष्यो न च बान्धवः ॥
आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ॥ ३९ ॥
यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् ॥
यद्भयाद्वर्षते देवो भगणो भाति यद्भयात् ॥ ४० ॥
यद्वनस्पतयो भीता लताश्चौषधिभिः सह ॥
स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च ॥४१॥
स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः ॥
अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात् ॥ ४२ ॥
नभो ददाति श्वसतां पदं यन्नियमाददः ॥
लोकं स्वदेहं तनुते महान्सप्तभिरावृतम् ॥ ४३ ॥
गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् ॥

वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम् ॥ ४४ ॥
सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ॥
जनं जनेन जनयन्मारयन्मृत्युनान्तकम् ॥ ४५ ॥
इति श्रीमद्भागवते कपिलगीतायां पंचमोऽध्यायः ॥ ५ ॥

---

श्रीभगवानुवाच ॥ तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम् ॥
काल्यमानोऽपि बलिनो वायोरिव घनावलिः ॥ १ ॥
यं यमर्थमुपादत्ते दुःखेन सुखहेतवे ॥
तं तं धुनोति भगवान्पुमान्शोचति यत्कृते ॥ २ ॥
यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः ॥
ध्रुवाणि मन्यते मोहाद्गृहक्षेत्रवसूनि च ॥ ३ ॥
जन्तुर्वै भव एतस्मिन्यां यां योनिमनुव्रजेत् ॥
तस्यां तस्यां स लभते निर्वृतिं न विरज्यते ॥ ४ ॥
नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति ॥
नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः ॥ ५ ॥
आत्मजायासुतागारपशुद्रविणबन्धुषु ॥
निरूढमूलहृदय आत्मानं बहु मन्यते ॥ ६ ॥
संदह्यमानसर्वांग एषामुद्वहनाधिना ॥
करोत्यविरतं मूढो दुरितानि दुराशयः ॥ ७ ॥
आक्षिप्तात्मेन्द्रियः स्त्रीणामसतीनां च मायया ॥
रहो रचितयालापैः शिशूनां कलभाषिणाम् ॥ ८ ॥
गृहेषु कूटधर्मेषु दुःखतंत्रेष्वतन्द्रितः ॥
कुर्वन्दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥
अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ॥
पुष्णाति येषां पोषेण शेषभुग्यात्यधः स्वयम् ॥ १० ॥
वार्तायां लुप्यमानायां आरब्धायां पुनः पुनः ॥

लोभाभिभूतो निःसत्त्वः परार्थे कुरुते स्पृहाम् ॥ ११
कुटुंबभरणाकल्पो मन्दभाग्यो वृथोद्यमः ॥
श्रिया विहीनः कृपणो ध्यायन्श्वसिति मूढधीः ॥ १२
एवं स्वभरणाकल्पं तत्कलत्रादयस्तथा ॥
नाद्रियन्ते यथापूर्वं कीनाशा इव गोजरम् ॥ १३ ॥
तत्राप्यजातनिर्वेदो म्रियमाणः स्वयंभृतैः ॥
जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥
आस्तेऽवमत्योपन्यस्तं गृहपाल इवाहरन् ॥
आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ १५ ॥
वायुनोत्क्रमतोत्तारः कफसंरुद्धनाडिकः ॥
कासश्वासकृतायासः कंठे घुरघुरायते ॥ १६ ॥
शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः ॥
वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७ ॥
एवं कुटुंबभरणे व्यापृतात्माऽजितेन्द्रियः ॥
म्रियते रुदतां स्वानामुरुवेदनयास्तधीः ॥ १८ ॥
यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ॥
स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुंचति ॥ १९ ॥
यातनादेह आवृत्य पाशैर्बद्ध्वा गले बलात् ॥
नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥ २० ॥
तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ॥
पथि श्वभिर्भक्ष्यमाण आर्तोऽघं समनुस्मरन् ॥ २१
क्षुत्तृट्परीतोऽर्कदवानलानिलैः संतप्यमानः पथि त
वालुके ॥ कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्य
क्तोऽपि निराश्रमोदके ॥ २२ ॥
तत्र तत्र पतन् श्रान्तो मूर्च्छितः पुनरुत्थितः ॥
पथा पापीयसा नीतस्तमसा यमसादनम् ॥ २३ ॥

योजनानां सहस्राणि नवतिं नव चाऽध्वनः ॥
त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः ॥ २४ ॥
आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः ॥
आत्ममांसादनं क्वापि स्वकृतं परतोऽपि वा ॥ २५ ॥
जीवतश्चांत्राभ्युद्धारः श्वगृध्रैर्यमसादने ॥
सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम् ॥ २६ ॥
कृंतनं चावयवशो गजादिभ्योऽभिदापनम् ॥
पातनं गिरिश्रृंगेभ्यो रोधनं चांबुगर्तयोः ॥ २७ ॥
यास्तामिस्रान्धतामिस्रा रौरवाद्याश्च यातनाः ॥
भुंक्ते नरो वा नारी वा मिथः संगेन निर्मिताः ॥२८॥
अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते ॥
या यातना वै नारक्यस्ता इहाप्युपलक्षिताः ॥ २९ ॥
एवं कुटुंबं बिभ्राण उदरंभर एव वा ॥
विसृज्येहोभयं प्रेत्य भुंक्ते तत्फलमीदृशम् ॥ ३० ॥
एकः प्रपद्यते ध्वान्तं हित्वेदं स्वकलेवरम् ॥
कुशलेतरपाथेयो भूतद्रोहेण यद्भृतम् ॥ ३१ ॥
दैवेनासादितं तस्य शमलं निरये पुमान् ॥
भुंक्ते कुटुंबपोषस्य हृतवित्त इवातुरः ॥ ३२ ॥
केवलेन ह्यधर्मेण कुटुंबभरणोत्सुकः ॥
याति जीवोऽन्धतामिस्रं चरमं तमसः पदम् ॥ ३३ ॥
अधस्तान्नरलोकस्य यावतीर्यातनादयः ॥
क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः ॥ ३४ ॥
इति श्रीमद्भागवते कपिलगीतायां कर्मविपाको नाम षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीभगवानुवाच ॥ कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये ॥
स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥

कललं त्वेकरात्रेण पंचरात्रेण बुद्बुदम् ॥
दशाहेन तु कर्कन्धूः पेश्यण्डं वा ततः परम् ॥ २ ॥
मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यंगविग्रहः ॥
नखलोमास्थिचर्माणि लिंगच्छिद्रोद्भवास्त्रिभिः ॥ ३ ॥
चतुर्भिर्धातवः सप्त पंचभिः क्षुत्तृडुद्भवः ।
षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे ॥ ४ ॥
मातुर्जग्धान्नपानाद्यैरेधद्धातुरसंमते ॥
शेते विण्मूत्रयोर्गर्ते स जंतुर्जंतुसंभवे ॥ ५ ॥
कृमिभिः क्षतसर्वांगः सौकुमार्यात्प्रतिक्षणम् ॥
मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः ॥ ६ ॥
कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः ॥
मातृभुक्तैरुपस्पृष्टः सर्वांगोत्थितवेदनः ॥ ७ ॥
उल्बेन संवृतस्तस्मिन्नन्त्रैश्च बहिरावृतः ॥
आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ ८ ॥
अकल्पः स्वांगचेष्टायां शकुन्त इव पंजरे ॥
तत्र लब्धस्मृतिर्दैवात्कर्म जन्मशतोद्भवम् ॥
स्मरन्दीर्घमनुच्छ्वासं शर्म किं नाम विन्दते ॥ ९ ॥
आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि वेपितः ॥
नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः ॥ १० ॥
नाथमान ऋषिर्भीतः सप्तवध्रिः कृतांजलिः ॥
स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ ११ ॥
तस्योपसन्नमवितुं जगदिच्छयात्तनानातनोर्भुविचलच्चरणारविंदम् ॥ सोऽहं व्रजामि शरणं ह्यकुतोभयं मे येनेदृशी गतिरदर्श्यसतोऽनुरूपा ॥ १२ ॥
यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेन्द्रियाशयमयीमवलंब्य मायाम् ॥ आस्ते विशुद्धमविकारमखंडबोध-

मातप्यमान हृदयेऽवसितं नमामि ॥ १३ ॥
यः पंचभूतरचिते रहितः शरीरे छन्नो यथेन्द्रियगुणार्थ-
चिदात्मकोऽहम् ॥ तेनाविकुंठमहिमानमृषिं तमेनं वन्दे
परं प्रकृतिपूरुषयोः पुमांसम् ॥ १४ ॥
यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन्सांसारिके पथि चरं-
स्तदभिश्रमेण ॥ नष्टस्मृतिः पुनरयं प्रवृणीत लोकं यु-
क्त्या कया महदनुग्रहमन्तरेण ॥ १५ ॥
ज्ञानं यदेतददधात्कतमः स देवस्त्रैकालिकं स्थिरचरेष्व-
नुवर्तितांशः ॥ तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयो-
पशमनाय वयं भजेम ॥ १६ ॥
देह्यन्यदेहविवरे जठराग्निनासृग्विण्मूत्रकूपपतितो भृशत-
प्तदेहः ॥ इच्छन्नितो विवसितुं गणयन्स्वमासान्निर्वास्यते
कृपणधीर्भगवन्कदा नु ॥ १७ ॥
येनेदृशीं गतिमसौ दशमास्य ईश संग्राहितः पुरुदयेन
भवादृशेन ॥ स्वेनैव तुष्यतु कृतेन स दीननाथः को
नाम तत्प्रति विनांजलिमस्य कुर्यात् ॥ १८ ॥
पश्यत्ययं धिषणया ननु सप्तवध्रिः शारीरके दमशरी-
र्यपरः स्वदेहे ॥ यत्सृष्टयास तमहं पुरुषं पुराणं पश्ये
बहिर्हृदि च चैत्यमिव प्रतीतम् ॥ १९ ॥
सोऽहं वसन्नपि विभो बहुदुःखवासं गर्भान्न निर्जिगमिषे
बहिरन्धकूपे ॥ यत्रोपयातमुपसर्पति देवमाया मिथ्या-
मतिर्यदनुसंसृतिचक्रमेतत् ॥ २० ॥
तस्मादहं विगतविक्लव उद्धरिष्य आत्मानमाशु तमसः
सुहृदात्मनैव ॥ भूयो यथा व्यसनमेतदनेकरंध्रं मा मे
भविष्यदुपसादितविष्णुपादः ॥ २१ ॥
कपिल उवाच ॥ एवं कृतमतिर्गर्भे दशमास्यः स्तुवन्नृषिः ॥

सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २२ ॥
तेनावसृष्टः सहसा कृत्वावाक्शिर आतुरः ॥
विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हतस्मृतिः ॥२३॥
पतितो भुव्यसृङ्मूत्रे विष्ठाभूरिव चेष्टते ॥
रोरूयति गते ज्ञाने विपरीतां गतिं गतः ॥२४॥
परच्छंदं न विदुषा पुष्यमाणो जनेन सः ॥
अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ॥ २५ ॥
शायितोऽशुचिपर्यंके जन्तुस्वेदजदूषिते ॥
नेशः कंडूयनेऽगानामासनोत्थानचेष्टने ॥ २६ ॥
तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः ॥
रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा ॥ २७ ॥
इत्येवं शैशवं भुक्त्वा दुःखं पौगंडमेव च ॥
अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचार्पितः ॥ २८ ॥
सह देहेन मानेन वर्धमानेन मन्युना ॥
करोति विग्रहं कामी कामिष्वन्ताय चात्मनः ॥ २९ ॥
भूतैः पंचभिरारब्धे देहे देह्यबुधोऽसकृत् ॥
अहंममेत्यसद्ग्राहः करोति कुमतिर्मतिम् ॥ ३० ॥
तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् ॥
योऽनुयाति ददत्क्लेशमविद्याकर्मबन्धनः ॥ ३१ ॥
यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः ॥
आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ३२ ॥
सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा ॥
शमो दमो भगश्चेति यत्संगाद्याति संक्षयम् ॥ ३३ ॥
तेष्वशान्तेषु मूढेषु खण्डितात्मस्वसाधुषु ॥
सगं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ॥ ३४ ॥
न तथास्य भवेन्मोहो बंधश्चान्यप्रसंगतः ॥

योषित्संगाद्यथा पुंसो यथा तत्संगिसंगतः ॥ ३५ ॥
प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः ॥
रोहिद्भूतां सोऽन्वधावदृक्षरूपी हतत्रपः ॥ ३६ ॥
तत्सृष्टसृष्टसृष्टेषु कोऽन्वखंडितधीः पुमान् ॥
ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ ३७ ॥
बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् ॥
या करोति पदाक्रान्तान् भ्रूविजृंभेण केवलम् ॥ ३८ ॥
संगं न कुर्यात्प्रमदासु जातु योगस्य पारं परमारुरुक्षुः॥
मत्सेवया प्रतिलब्धात्मलाभो वदन्ति या निरयद्वारमस्य
योपयाति शनैर्माया योषिद्देवविनिर्मिता ॥
तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ ४० ॥
यां मन्यते पतिं मोहान्मन्मायामृषभायतीम् ॥
स्त्रीत्वं स्त्रीसंगतः प्राप्तो वित्तापत्यगृहप्रदम् ॥ ४१ ॥
तामात्मनो विजानीयात्पत्यपत्यगृहात्मकम् ॥
दैवोपसादितं मृत्युं मृगयोर्गायनं यथा ॥ ४२ ॥
देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् ॥
भुंजान एव कर्माणि करोत्यविरतं पुमान् ॥ ४३ ॥
जीवो ह्यस्यानुगो देहो भूतेन्द्रियमनोमयः ॥
तन्निरोधोऽस्य मरणमाविर्भावस्तु संभवः ॥ ४४ ॥
द्रव्योपलब्धिस्थानस्य द्रव्येक्षायोग्यता यदा ॥
तत्पंचत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनम् ॥ ४५ ॥
यथाक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा ॥
तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वायोग्यतानयोः ॥ ४६ ॥
तस्मान्न कार्यः संत्रासो न कार्पण्यं न संभ्रमः ॥
बुद्ध्वा जीवगतिं धीरो मुक्तसंगश्चरेदिह ॥ ४७ ॥
सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया ॥

मायाविरचिते लोके चरेन्न्यस्य कलेवरम् ॥ ४८ ॥
इति श्रीमद्भागवते कपिलगीतायां जीवगतिर्नाम सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीभगवानुवाच ॥ अथ यो गृहमेधीयान्धर्मानेवावसन्गृहे ॥
काममर्थं च धर्मान्स्वान्दोग्धि भूयः पिपर्ति तान् ॥ १ ॥
स चापि भगवद्धर्मात्काममूढः पराङ्मुखः ॥
यजते क्रतुभिर्देवान्पितॄंश्च श्रद्धयान्वितः ॥ २ ॥
तच्छ्रद्धयाक्रान्तमतिः पितृदेवव्रतः पुमान् ॥
गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ॥ ३ ॥
यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः ॥
तदा लोका लयं यान्ति त एते गृहमेधिनाम् ॥ ४ ॥
ये स्वधर्मान्न दुह्यन्ति धीराः कामार्थहेतवे ॥
निःसंगा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥ ५ ॥
निवृत्तिधर्मनिरता निर्ममा निरलंकृताः ॥
स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥
सूर्यद्वारेण ये यान्ति पुरुषं विश्वतोमुखम् ॥
परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥ ७ ॥
द्विपरार्धावसाने यः प्रलयो ब्रह्मणस्तु ते ॥
तावदध्यासते लोकं परस्य परचिन्तकाः ॥ ८ ॥
क्ष्मांभोऽनलानिलवियन्मनइंद्रियार्थभूतादिभिः परिवृतं
प्रतिसंजिहीर्षुः ॥ अव्याकृतं विशति यर्हि गुणत्रयात्मा
कालं पराख्यमनुभूय परः स्वयंभूः ॥ ९ ॥
एवं परेत्य भगवन्तमनुप्रविष्टा ये योगिनो जितमरुन्म-
नसो विरागाः ॥ तेनैव साकममृतं पुरुषं पुराणं ब्रह्म
प्रधानमुपयान्त्यगताभिमानाः ॥ १० ॥
अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् ॥

श्रुतानुभावं शरणं व्रज भावेन भामिनि ॥ ११ ॥
आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ॥
योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥ १२ ॥
भेददृष्ट्याभिमानेन निःसंगेनापि कर्मणा ॥
कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥ १३ ॥
स संसृत्य पुनः काले कालेनेश्वरमूर्तिना ॥
जाते गुणव्यतिकरे यथापूर्वं प्रजायते ॥ १४ ॥
ऐश्वर्यं पारमेष्ठ्यं च तेऽपि धर्मविनिर्मितम् ॥
निषेव्य पुनरायान्ति गुणव्यतिकरे सति ॥ १५ ॥
ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः ॥
कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ॥ १६ ॥
राजसाः कुण्ठमनसः कामात्मानो जितेन्द्रियाः ॥
पितॄन्यजन्त्यनुदिनं गृहेष्वभिरताशयाः ॥ १७ ॥
त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः ॥
कथायां कथनीयोरुविक्रमस्य मधुद्विषः ॥ १८ ॥
नूनं दैवेन विहता ये चाच्युतकथासुधाम् ॥
हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः ॥ १९ ॥
दाक्षिणेन यथार्यम्णः पितृलोकं व्रजन्ति ते ॥
प्रजामनुप्रजायन्ते श्मशानान्तक्रियाकृतः ॥ २० ॥
ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति ॥
पतन्ति विवशा देवैः सद्यो विभ्रंशितोदयाः ॥ २१ ॥
तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम् ॥
तद्गुणाश्रयया भक्त्या भजनीयपदांबुजम् ॥ २२ ॥
वासुदेवे भगवति भक्तियोगः प्रयोजितः ॥
जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम् ॥ २३ ॥
यदास्य चित्तमर्थेषु समेष्विंद्रियवृत्तिभिः ॥

न विगृह्णाति वैषम्यं प्रियमप्रियमित्युत ॥ २४ ॥
स तदैवात्मनात्मानं निःसंगं समदर्शनम् ॥
हेयोपादेयरहितमारूढं पदमीक्षते ॥ २५ ॥
ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् ॥
दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ॥ २६ ॥
एतावानेव योगेन समग्रेणेह योगिनः ॥
युज्यतेऽभिमतो ह्यर्थो यदसंगस्तु कृत्स्नशः ॥ २७ ॥
ज्ञानमेकं पराचीनैरिंद्रियैर्ब्रह्म निर्गुणम् ॥
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा ॥ २८ ॥
यथा महानहंरूपस्त्रिवृत्पंचविधः स्वराट् ॥
एकादशविधस्तस्य वपुरंडं जगद्यतः ॥ २९ ॥
एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ॥
समाहितात्मा निःसंगो विरक्त्या परिपश्यति ॥ ३०
इत्येतत्कथितं गुर्वि ज्ञानं तद्ब्रह्मदर्शनम् ॥
येनानुबुद्ध्यते तत्त्वं प्रकृतेः पुरुषस्य च ॥ ३१ ॥
ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ॥
द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ ३२ ॥
यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ॥
एको नानेयते तद्वद्भगवान् शास्त्रवर्त्मभिः ॥ ३३ ॥
क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायमर्शनैः ॥
आत्मेन्द्रियजयेनापि संन्यासेन च कर्मणाम् ॥ ३४
योगेन विविधांगेन भक्तियोगेन चैव हि ॥
धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् ॥ ३५ ॥
आत्मतत्त्वाववोधेन वैराग्येण दृढेन च ॥
ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक् ॥ ३६
प्रावोच भक्तियोगस्य स्वरूपं ते चतुर्विधम् ॥

कालस्य चाव्यक्तगतेर्योऽन्तर्धावति जन्तुषु ॥ ३७ ॥
जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः ॥
यास्वंग प्रविशन्नात्मा न वेद गतिमात्मनः ॥ ३८ ॥
नैतत्खलायोपदिशेन्नाविनीताय कर्हिचित् ॥
न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च ॥ ३९ ॥
न लोलुपायोपदिशेन्न गृहारूढचेतसे ॥
नाभक्ताय च मे जातु न मद्भक्तद्विषामपि ॥ ४० ॥
श्रद्दधानाय भक्ताय विनीतायानसूयवे ॥
भूतेषु कृतमैत्राय शुश्रूषाभिरताय च ॥ ४१ ॥
बहिर्जातविरागाय शान्तचित्ताय दीयताम् ॥
निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः ॥ ४२ ॥
य इदं शृणुयादंब श्रद्धया पुरुषः सकृत् ॥
यो वाऽभिधत्ते मच्चित्तः स ह्येति पदवीं च मे ॥ ४३॥
इति श्रीमद्भागवते कपिलगीतायामष्टमोऽध्यायः ॥ ८ ॥

---

मैत्रेय उवाच ॥ एवं निशम्य कपिलस्य वचो जनित्री सा कर्द-
मस्य दयिता किल देवहूतिः ॥ विस्रस्तमोहपटला तम-
भिप्रणम्य तुष्टाव तत्त्वविषयांकितसिद्धिभूमिम् ॥ १ ॥
देवहूतिरुवाच ॥ अथाप्यजोऽन्तःसलिले शयानं भूतेंद्रिया-
र्थात्ममयं वपुस्ते ॥ गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं
यज्जठराब्जजातः ॥ २ ॥
स एव विश्वस्य भवान्विधत्ते गुणप्रवाहेण विभक्तवीर्यः ॥
सर्गाद्यनीहो वितथाभिसंधिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः
स त्वं भृतो मे जठरेण नाथ कथं नु यस्योदर एत-
दासीत् ॥ विश्वं युगान्ते वटपत्र एकः शेते स्म माया-
शिशुरंघ्रिपानः ॥ ४ ॥

त्वं देहतंत्रः प्रशमाय पाप्मनां निदेशभाजां च विभो
विभूतये ॥ यथावतारास्तव सूकरादयस्तथायमप्यात्म
पथोपलब्धये ॥ ५ ॥
यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्व
चित् ॥ श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते
भगवन्नु दर्शनात् ॥ ६ ॥
अहो बत श्वपचोऽतो गरीयान्यज्जिह्वाग्रे वर्तते नाम
तुभ्यम् ॥ तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम
गृणन्ति ये ते ॥ ७ ॥
तं त्वामहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतःस्वात्मनि संवि
भाव्यम् ॥ स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं
कपिलं वेदगर्भम् ॥ ८ ॥
मैत्रेय उवाच ॥ ईडितो भगवानेवं कपिलाख्यः परः पुमान्
वाचा विक्लवयेत्याह मातरं मातृवत्सलः ॥ ९ ॥
कपिल उवाच ॥ मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे ॥
आस्थितेन परां काष्ठामचिरादवरोत्स्यसि ॥ १० ॥
श्रद्धस्वैतन्मतं मह्यं जुष्टं यद्ब्रह्मवादिभिः ॥
येन मामभवं याया मृत्युमृच्छन्त्यतद्विदः ॥ ११ ॥
मैत्रेय उवाच ॥ इति प्रदर्श्य भगवान्सतीं तामात्मनो गतिम्
स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ ॥ १२
सा चापि तनयोक्तेन योगादेशेन योगयुक् ॥
तस्मिन्नाश्रम आपीडे सरस्वत्याः समाहिता ॥ १३ ॥
अभीक्ष्णावगाहकपिशान् जटिलान्कुटिलालकान् ॥
आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥ १४ ॥
प्रजापतेः कर्दमस्य तपोयोगविजृंभितम् ॥
स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥ १५

पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ॥
आसनानि च हैमानि सुस्पर्शास्तरणानि च ॥ १६ ॥
स्वच्छस्फटिककुड्येषु महामारकतेषु च ॥
रत्नप्रदीपा आभान्ति ललनारत्नसंयुताः ॥ १७ ॥
गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः ॥
कूजद्विहंगमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥
यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः ॥
वाप्यामुत्पलगंधिन्यां कर्दमेनोपलालितम् ॥ १९ ॥
हित्वा तदीप्सिततममप्याखण्डलयोषिताम् ॥
किंचिच्चकार वदनं पुत्रविश्लेषणातुरा ॥ २० ॥
वनं प्रव्रजिते पत्यावपत्यविरहातुरा ॥
ज्ञाततत्त्वाप्यभून्नष्टे वत्से गौरिव वत्सला ॥ २१ ॥
तमेव ध्यायती देवमपत्यं कपिलं हरिम् ॥
बभूवाचिरतो वत्सानिःस्पृहा तादृशे गृहे ॥ २२ ॥
ध्यायती भगवद्रूपं यदाह ध्यानगोचरम् ॥
सुतं प्रसन्नवदनं समस्तव्यस्तचिन्तया ॥ २३ ॥
भक्तिप्रवाहयोगेन वैराग्येण बलीयसा ॥
युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना ॥ २४ ॥
विशुद्धेन तथात्मानमात्मना विश्वतोमुखम् ॥
स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ २५ ॥
ब्रह्मण्यवास्थितमतिर्भगवत्यात्मसंश्रये ॥
निवृत्तजीवापत्तित्वात्क्षीणक्लेशाप्तनिर्वृतिः ॥ २६ ॥
नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा ॥
न सस्मार तदात्मानं स्वप्ने दृष्टमिवोत्थितः ॥ २७ ॥
तद्देहः परतः पोषोऽप्यकृशश्चाध्यसंभवात् ॥
बभौ मलैरवच्छन्नः सधूम इव पावकः ॥ २८ ॥

स्वांगं तपोयोगमयं मुक्तकेशं गतांबरम् ॥
दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥ २९ ॥
एवं सा कपिलोक्तेन मार्गेणाचिरतः परम् ॥
आत्मानं ब्रह्मनिर्वाणं भगवन्तमवाप ह ॥ ३० ॥
तद्वीरासीत्पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ॥
नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥
तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत्सरित् ॥
स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता ॥ ३२
कपिलोऽपि महायोगी भगवान्पितुराश्रमात् ॥
मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥
सिद्धचारणगंधर्वैर्मुनिभिश्चाप्सरोगणैः ॥
स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥
आस्ते योगं समास्थाय सांख्याचार्यैरभिष्टुतः ॥
त्रयाणामपि लोकानामुपशान्त्यै समाहितः ॥ ३५ ॥
एतन्निगादितं तात यत्पृष्टोऽहं तवानघ ॥
कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ३६ ॥
य इदमनुशृणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम्
भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविन्दम् ॥ ३७

इति श्रीभागवते कपिलगीतायां नवमोऽध्यायः ॥ ९ ॥

---

॥ इति कपिलगीता समाप्ता ॥

---

## ॥ अथ श्रीमदष्टावक्रगीता प्रारभ्यते ॥

जनक उवाच ॥ कथं ज्ञानमवाप्नोति कथं मुक्तिर्भविष्यति ॥
वैराग्यं च कथं प्राप्तमेतद् ब्रूहि मम प्रभो ॥ १ ॥
अष्टावक्र उवाच ॥ मुक्तिमिच्छसि चेत्तात विषयान्विषवत् त्यज॥
क्षमार्जवदयातोषसत्यं पीयूषवद्भज ॥ २ ॥
न पृथ्वी न जलं नाग्निर्न वायुर्द्यौर्न वा भवान् ॥
एषां साक्षिणमात्मानं चिद्रूपं विद्धि मुक्तये ॥ ३ ॥
यदि देहं पृथक्कृत्य चिति विश्राम्य तिष्ठसि ॥
अधुनैव सुखी शान्तो बन्धमुक्तो भविष्यसि ॥ ४ ॥
न त्वं विप्रादिको वर्णो नाश्रमी नाक्षगोचरः ॥
असंगोऽसि निराकारो विश्वसाक्षी सुखी भव ॥ ५ ॥
धर्माधर्मौ सुखं दुःखं मानसानि न ते विभो ॥
न कर्तासि न भोक्तासि मुक्त एवासि सर्वदा ॥ ६ ॥
एको द्रष्टासि सर्वस्य मुक्तप्रायोऽसि सर्वदा ॥
अयमेव हि ते बंधो द्रष्टारं पश्यसीतरम् ॥ ७ ॥
अहं कर्तेत्यहंमानमहाकृष्णाहिदंशितः ॥
नाहं कर्तेति विश्वासामृतं पीत्वा सुखी भव ॥ ८ ॥
एको विशुद्धबोधोऽहमिति निश्चयवह्निना॥
प्रज्वाल्याज्ञानगहनं वीतशोकः सुखी भव ॥ ९ ॥
यत्र विश्वमिदं भाति कल्पितं रज्जुसर्पवत् ॥
आनन्दपरमानन्दः स बोधस्त्वं सुखं चर ॥ १० ॥
मुक्ताभिमानी मुक्तो हि बद्धो बद्धाभिमान्यपि ॥
किंवदन्तीह सत्येयं या मतिः सा गतिर्भवेत् ॥ ११ ॥
आत्मा साक्षी विभुः पूर्ण एको मुक्तश्चिदक्रियः ॥
असंगो निःस्पृहः शान्तो भ्रमात्संसारवानिव ॥ १२ ॥

कूटस्थं बोधमद्वैतमात्मानं परिभावय ॥
आभासोऽहं भ्रमं मुक्त्वा भावं बाह्यमथान्तरम् ॥ १३ ॥
देहाभिमानपाशेन चिरं बद्धोऽसि पुत्रक ॥
बोधोऽहं ज्ञानखड्गेन तन्निःकृत्य सुखी भव ॥ १४ ॥
निःसंगो निष्क्रियोऽसि त्वं स्वप्रकाशो निरंजनः ॥
अयमेव हि ते बंधः समाधिमनुतिष्ठति ॥ १५ ॥
त्वया व्याप्तमिदं विश्वं त्वयि प्रोतं यथार्थतः ॥
शुद्धबुद्धस्वरूपस्त्वं मा गमः क्षुद्रचित्तताम् ॥ १६ ॥
निरपेक्षो निर्विकारो निर्भरः शीतलाशयः ॥
अगाधबुद्धिरक्षुब्धो भव चिन्मात्रवासनः ॥ १७ ॥
साकारमनृतं विद्धि निराकारं तु निश्चितम् ॥
एतत्तत्त्वोपदेशेन न पुनर्भवसंभवः ॥ १८ ॥
यथैवादर्शमध्यस्थे रूपेऽन्तः परितस्तु सः ॥
तथैवास्मिन् शरीरेऽन्तः परितः परमेश्वरः ॥ १९ ॥
एकं सर्वगतं व्योम बहिरन्तर्यथा घटे ॥
नित्यं निरन्तरं ब्रह्म सर्वभूतगणे तथा ॥ २० ॥

इति प्रथमोऽध्यायः ॥ १ ॥

---

अहो निरंजनः शान्तो बोधोऽहं प्रकृतेः परः ॥
एतावन्तमहं कालं मोहेनैव विडंबितः ॥ १ ॥
यथा प्रकाशयाम्येको देहमेनं तथा जगत् ॥
अतो मम जगत्सर्वमथवा न च किंचन ॥ २ ॥
स शरीरमहो विश्वं परित्यज्य मयाधुना ॥
कुतश्चित्कौशलादेव परमात्मा विलोक्यते ॥ ३ ॥
यथा न तोयतो भिन्नास्तरंगाः फेनबुद्बुदाः ॥

आत्मनो न तथा भिन्नं विश्वमात्मविनिर्गतम् ॥ ४ ॥
तंतुमात्रो भवेदेव पटो यद्वद्विचारितः ॥
आत्मतन्मात्रमेवेदं तद्वद्विश्वं विचारितम् ॥ ५ ॥
यथैवेक्षुरसे क्लृप्ता तेन व्याप्तैव शर्करा ॥
तथा विश्वं मयि क्लृप्तं मया व्याप्तं निरन्तरम् ॥ ६ ॥
आत्माज्ञानाज्जगद्भाति आत्मज्ञानान्न भासते
रज्ज्वज्ञानादहिर्भाति तज्ज्ञानाद्भासते न हि ॥ ७ ॥
प्रकाशो मे निजं रूपं नातिरिक्तोऽस्म्यहं ततः ॥
यदा प्रकाशते विश्वं तदाऽहंभास एव हि ॥ ८ ॥
अहो विकल्पितं विश्वमज्ञानान्मयि भासते ॥
रूप्यं शुक्तौ फणी रज्जौ वारि सूर्यकरे यथा ॥ ९ ॥
मत्तो विनिर्गतं विश्वं मय्येव लयमेष्यति ॥
मृदि कुंभो जले वीचिः कनके कटकं यथा ॥ १० ॥
अहो अहं नमो मह्यं विनाशो यस्य नास्ति मे ॥
ब्रह्मादिस्तंबपर्यन्तं जगन्नाशेऽपि तिष्ठतः ॥ ११ ॥
अहो अहं नमो मह्यमेकोऽहं देहवानपि ॥
क्वचिन्न गन्ता नागन्ता व्याप्य विश्वमवस्थितः ॥ १२ ॥
अहो अहं नमो मह्यं दक्षो नास्तीह मत्समः ॥
असंस्पृश्य शरीरेण येन विश्वं चिरं धृतम् ॥ १३ ॥
अहो अहं नमो मह्यं यस्य मे नास्ति किंचन ॥
अथवा यस्य मे सर्वं यद्वाङ्मनसगोचरम् ॥ १४ ॥
ज्ञानं ज्ञेयं तथा ज्ञाता त्रितयं नास्ति वास्तवम् ॥
अज्ञानाद्भाति यत्रेदं सोऽहमस्मि निरंजनः ॥ १५ ॥
द्वैतमूलमहो दुःखं नान्यत्तस्यास्ति भेषजम् ॥
दृश्यमेतन्मृषा सर्वं एकोऽहं चिद्रसोऽमलः ॥ १६ ॥
बोधमात्रोऽहमज्ञानादुपाधिः कल्पितो मया ॥

एवं विमृशतो नित्यं निर्विकल्पे स्थितिर्मम ॥ १७ ॥
न मे बंधोऽस्ति मोक्षो वा भ्रांतिः शांता निराश्रया ॥
अहो मयि स्थितं विश्वं वस्तुतो न मयि स्थितम् ॥ १८
सशरीरमिदं विश्वं न किंचिदिति निश्चितम् ॥
शुद्धचिन्मात्र आत्मा च तत्कस्मिन्कल्पनाधुना ॥ १९॥
शरीरं स्वर्गनरकौ बंधमोक्षौ भयं तथा ॥
कल्पनामात्रमेवैतत्किं मे कार्यं चिदात्मनः ॥ २० ॥
अहो जनसमूहेऽपि न द्वैतं पश्यतो मम ॥
अरण्यमिव संवृत्तं क्व रतिं करवाण्यहम् ॥ २१ ॥
नाहं देहो न मे देहो जीवो नाहमहं हि चित् ॥
अयमेव हि मे बंध आसीद्या जीविते स्पृहा ॥ २२॥
अहो भुवनकल्लोलैर्विचित्रैर्द्राक् समुत्थितम् ॥
मय्यनंतमहांभोधौ चित्तवाते समुद्यते ॥ २३ ॥
मय्यनंतमहांभोधौ चित्तवाते प्रशाम्यति ॥
अभाग्याज्जीववणिजो जगत्पोतो विनश्वरः ॥ २४ ॥
मय्यनंतमहांभोधावाश्चर्यं जीववीचयः ॥
उद्यन्ति घ्नन्ति खेलन्ति प्रविशन्ति स्वभावतः ॥ २५॥

इति द्वितीयोऽध्यायः ॥ २ ॥

---

अविनाशिनमात्मानमेकं विज्ञाय तत्त्वतः ॥
तवात्मज्ञस्य धीरस्य कथमर्थार्जने रतिः ॥ १ ॥
आत्माज्ञानादहो प्रीतिर्विषये भ्रमगोचरे ॥
शुक्तेरज्ञानतो लोभो यथा रजतविभ्रमे ॥ २ ॥
विश्वं स्फुरति यत्रेदं तरंगा इव सागरे ॥
सोऽहमस्मीति विज्ञाय किं दीन इव धावसि ॥ ३ ॥
श्रुत्वापि शुद्धचैतन्यमात्मानमतिसुंदरम् ॥

उपस्थेऽत्यंतसंसक्तो मालिन्यमधिगच्छति ॥ ४ ॥
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥
मुनेर्जानत आश्चर्यं ममत्वमनुवर्तते ॥ ५ ॥
आस्थितः परमाद्वैतं मोक्षार्थेऽपि व्यवस्थितः ॥
आश्चर्यं कामवशगो विकलः केलिशिक्षया ॥ ६ ॥
उद्भूतं ज्ञानदुर्मित्रमवधार्यातिदुर्बलः ॥
आश्चर्यं काममाकांक्षेत्कालमंतमनुश्रितः ॥ ७ ॥
इहामुत्रविरक्तस्य नित्यानित्यविवेकिनः ॥
आश्चर्यं मोक्षकामस्य मोक्षादेव विभीषिका ॥ ८ ॥
धीरस्तु भोज्यमानोऽपि पीड्यमानोऽपि सर्वदा ॥
आत्मानं केवलं पश्यन्न तुष्यति न कुप्यति ॥ ९ ॥
चेष्टमानं शरीरं स्वं पश्यत्यन्यशरीरवत् ॥
संस्तवे चापि निन्दायां कथं क्षुभ्येन्महाशयः ॥ १० ॥
मायामात्रमिदं विश्वं पश्यन्विगतकौतुकः ॥
अपि सन्निहिते मृत्यौ कथं त्रस्यति धीरधीः ॥ ११ ॥
निस्पृहं मानसं यस्य नैराश्येऽपि महात्मनः ॥
तस्यात्मज्ञानतृप्तस्य तुलना केन जायते ॥ १२ ॥
स्वभावादेव जानन्तो दृश्यमेतन्न किंचन ॥
इदं ग्राह्यमिदं त्याज्यं स किं पश्यति धीरधीः ॥ १३ ॥
अंतस्त्यक्तकषायस्य निर्द्वंद्वस्य निराशिषः ॥
यदृच्छयागतो भोगो न दुःखाय न तुष्टये ॥ १४ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

---

हन्तात्मज्ञस्य धीरस्य खेलतो भोगलीलया ॥
न हि संसारवाहीकैर्मूढैः सह समानता ॥ १ ॥
यत्पदं प्रेप्सवो दीनाः शक्राद्याः सर्वदेवताः ॥

अहो तत्र स्थितो योगी न हर्षमुपगच्छति ॥ २ ॥
तज्ज्ञस्य पुण्यपापाभ्यां स्पर्शो ह्यंतर्न जायते ॥
न ह्याकाशस्य धूमेन दृश्यमानापि संगतिः ॥ ३ ॥
आत्मैवेदं जगत्सर्वं ज्ञातं येन महात्मना ॥
यदृच्छया वर्तमानं तं निषेद्धुं क्षमेत कः ॥ ४ ॥
आब्रह्मस्तंबपर्यन्ते भूतग्रामे चतुर्विधे ॥
विज्ञस्यैव हि सामर्थ्यमिच्छानिच्छाविवर्जने ॥ ५ ॥
आत्मानमद्वयं कश्चिज्जानाति जगदीश्वरम् ॥
यद्वेत्ति तत्स कुरुते न भयं तस्य कुत्रचित् ॥ ६ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

---

न ते संगोऽस्ति केनापि किं शुद्धस्त्यक्तुमिच्छसि ॥
संघातविलयं कुर्वन्नेवमेव लयं व्रज ॥ १ ॥
उदेति भवतो विश्वं वारिधेरिव बुद्बुदः ॥
इति ज्ञात्वैकमात्मानमेवमेव लयं व्रज ॥ २ ॥
प्रत्यक्षमप्यवस्तुत्वाद्विश्वं नास्त्यमले त्वयि ॥
रज्जुसर्प इव व्यक्तमेवमेव लयं व्रज ॥ ३ ॥
समदुःखसुखः पूर्ण आशानैराश्ययोः समः ॥
समजीवितमृत्युः सन्नेवमेव लयं व्रज ॥ ४ ॥

इति पंचमोऽध्यायः ॥ ५ ॥

---

आकाशवदनन्तोऽहं घटवत्प्राकृतं जगत् ॥
इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयः ॥ १ ॥
महोदधिरिवाहं स प्रपंचो वीचिसंनिभः ॥
इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयः ॥ २ ॥
अहं स शुक्तिसंकाशो रूप्यवद्विश्वकल्पना ॥

इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयः ॥ ३ ॥
अहं वा सर्वभूतेषु सर्वभूतान्यथो मयि ॥
इति ज्ञानं तथैतस्य न त्यागो न ग्रहो लयः॥ ४ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

---

मय्यनन्तमहांभोधौ विश्वपोत इतस्ततः ॥
भ्रमति स्वान्तवातेन न ममास्त्यसहिष्णुता ॥ १ ॥
मय्यनन्तमहांभोधौ जगद्वीचिः स्वभावतः ॥
उदेतु वास्तमायातु न मे वृद्धिर्न च क्षतिः ॥ २ ॥
मय्यनन्तमहांभोधौ विश्वं नाम विकल्पना ॥
अतिशान्तो निराकार एतदेवाहमास्थितः॥ ३ ॥
नात्मा भावेषु नो भावस्तत्रानन्ते निरंजने ॥
इत्यसक्तोऽस्पृहः शान्त एतदेवाहमास्थितः ॥ ४ ॥
अहो चिन्मात्रमेवाहमिंद्रजालोपमं जगत् ॥
अतो मम कथं कुत्र हेयोपादेयकल्पना ॥ ५ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

---

तदा बंधो यदा चित्तं किंचिद्वाञ्छति शोचति ॥
किंचिन्मुंचति गृह्णाति किंचिद्धृष्यति कुप्यति ॥ १ ॥
तदा मुक्तिर्यदा चित्तं न वाञ्छति न शोचति॥
न मुंचति न गृह्णाति न हृष्यति न कुप्यति ॥ २ ॥
तदा बंधो यदा चित्तं सक्तं कास्वपि दृष्टिषु ॥
तदा मोक्षो यदा चित्तमसक्तं सर्वदृष्टिषु ॥ ३ ॥
यदा नाहं तदा मोक्षो यदाहं बंधनं तदा ॥
मत्वेति हेलया किंचिन्मा गृहाण विमुंच मा ॥ ४ ॥

इति अष्टमोऽध्यायः ॥ ८ ॥

---

कृताकृते च द्वंद्वानि कदा शान्तानि कस्य वा ॥
एवं ज्ञात्वेह निर्वेदाद्भव त्यागपरोऽव्रती ॥ १ ॥
कस्यापि तात धन्यस्य लोकचेष्टावलोकनात् ॥
जीवितेच्छा बुभुक्षा च बुभुत्सोपशमं गताः ॥ २ ॥
अनित्यं सर्वमेवेदं तापत्रितयदूषितम् ॥
असारं निंदितं हेयमिति निश्चित्य शाम्यति ॥ ३ ॥
कोऽसौ कालो वयः किंवा यत्र द्वंद्वानि नो नृणाम् ॥
तान्युपेक्ष्य यथाप्राप्तवर्ती सिद्धिमवाप्नुयात् ॥ ४ ॥
नाना मतं महर्षीणां साधूनां योगिनां तथा ॥
दृष्ट्वा निर्वेदमापन्नः को न शाम्यति मानवः ॥ ५ ॥
कृत्वा मूर्तिपरिज्ञानं चैतन्यस्य न किं गुरुः ॥
निर्वेदसमतायुक्त्या यस्तारयति संसृतेः ॥ ६ ॥
पश्य भूतविकारांस्त्वं भूतमात्रान् यथार्थतः ॥
तत्क्षणाद्बंधनिर्मुक्तः स्वरूपस्थो भविष्यसि ॥ ७ ॥
वासना एव संसार इति सर्वा विमुंच ताः ॥
तत्त्यागो वासनात्यागात्स्थितिरद्य यथा तथा ॥ ८ ॥

इति नवमोऽध्यायः ॥ ९ ॥

---

विहाय वैरिणं काममर्थं चानर्थसंकुलम् ॥
धर्ममप्येतयोर्हेतुं सर्वत्रानादरं कुरु ॥ १ ॥
स्वप्नेंद्रजालवत्पश्य दिनानि त्रीणि पंच वा ॥
मित्रक्षेत्रधनागारदारादायादिसंपदः ॥ २ ॥
यत्र यत्र भवेत्तृष्णा संसारं विद्धि तत्र वै ॥
प्रौढवैराग्यमाश्रित्य वीततृष्णः सुखी भव ॥ ३ ॥
तृष्णामात्रात्मको बंधस्तन्नाशो मोक्ष उच्यते ॥
भवासंसक्तिमात्रेण प्राप्तितुष्टिर्मुहुर्मुहुः ॥ ४ ॥

त्वमेकश्चेतनः शुद्धो जडं विश्वमसत्तथा ॥
अविद्यापि न किंचित्सा का बुभुत्सा तथापि ते ॥ ५ ॥
राज्यं सुताः कलत्राणि शरीराणि सुखानि च ॥
संसक्तस्यापि नष्टानि तव जन्मनि जन्मनि ॥ ६ ॥
अलमर्थेन कामेन सुकृतेनापि कर्मणा ॥
एभ्यः संसारकान्तारे न विश्रान्तमभून्मनः ॥ ७ ॥
कृतं न कति जन्मानि कायेन मनसा गिरा ॥
दुःखमायासदं कर्म तदद्याप्युपरम्यताम् ॥ ८ ॥

इति दशमोऽध्यायः ॥ १० ॥

भावाभावविकारश्च स्वभावादिति निश्चयी ॥
निर्विकारो गतक्लेशः सुखेनैवोपशाम्यति ॥ १ ॥
ईश्वरः सर्वनिर्माता नेहान्य इति निश्चयी ॥
अंतर्गलितसर्वाशः शान्तः क्वापि न सज्जते ॥ २ ॥
आपदः संपदः काले दैवादेवेति निश्चयी ॥
तृप्तः स्वस्थेंद्रियो नित्यं न वांछति न शोचति ॥ ३ ॥
सुखदुःखे जन्ममृत्यू दैवादेवेति निश्चयी ॥
साध्यादर्शी निरायासः कुर्वन्नपि न लिप्यते ॥ ४ ॥
चिंतया जायते दुःखं नान्यथेहेति निश्चयी ॥
तया हीनः सुखी शान्तः सर्वत्र गलितस्पृहः ॥ ५ ॥
नाहं देहो न मे देहो बोधोऽहमिति निश्चयी ॥
कैवल्यमिव संप्राप्तो न स्मरत्यकृतं कृतम् ॥ ६ ॥
आब्रह्मस्तबपर्यन्तमहमेवेति निश्चयी ॥
निर्विकल्पः शुचिः शान्तः प्राप्ताप्राप्तविनिर्वृतः ॥ ७ ॥
नानाश्चर्यमिदं विश्वं न किंचिदिति निश्चयी ॥
निर्वासनः स्फूर्तिमात्रो न किंचिदिव शाम्यति ॥ ८ ॥

इति एकादशोऽध्यायः ॥ ११ ॥

कायकृत्यासहः पूर्वं ततो वाग्विस्तरासहः ॥
अथ चिंतासहस्तस्मादेवमेवाहमास्थितः ॥ १ ॥
प्रीत्याभावेन शब्दादेरदृश्यत्वेन चात्मनः ॥
विक्षेपैकाग्रहृदय एवमेवाहमास्थितः ॥ २ ॥
समाध्यासादिविक्षिप्तौ व्यवहारः समाधये ॥
एवं विलोक्य नियममेवमेवाहमास्थितः ॥ ३ ॥
हेयोपादेयविरहादेवं हर्षविषादयोः ॥
अभावादद्य हे ब्रह्मन्नेवमेवाहमास्थितः ॥ ४ ॥
आश्रमानाश्रमं ध्यानं चित्तस्वीकृतवर्जनम् ॥
विकल्पं मम वीक्ष्यैतैरेवमेवाहमास्थितः ॥ ५ ॥
कर्मानुष्ठानमज्ञानाद्यथैवोपरमस्तथा ॥
बुद्ध्वा सम्यगिदं तत्त्वमेवमेवाहमास्थितः ॥ ६ ॥
अचिंत्यं चिंत्यमानोऽपि चिंतारूपं भजत्यसौ॥
त्यक्त्वा तद्भावनं तस्मादेवमेवाहमास्थितः ॥ ७ ॥
एवमेव कृतं येन स कृतार्थो भवेदसौ ॥
एवमेवस्वभावो यः स कृतार्थो भवेदसौ ॥ ८ ॥

इति द्वादशोऽध्यायः ॥ १२ ॥

---

अकिंचनभवं स्वास्थ्यं कौपीनत्वेऽपि दुर्लभम् ॥
त्यागादाने विहायास्मादहमासे यथासुखम् ॥ १॥
कुत्रापि खेदः कायस्य जिव्हा कुत्रापि खिद्यते ॥
मनः कुत्रापि तत्त्यक्त्वा पुरुषार्थे स्थितः सुखम् ॥ २
कृतं किमपि नैव स्यादिति संचिंत्य तत्त्वतः ॥
यथा यत्कर्तुमायाति तत्कृत्वासे यथासुखम् ॥ ३॥
कर्मनैष्कर्म्यनिर्बंधभावा देहस्थयोगिनः ॥
संयोगायोगविरहादहमासे यथासुखम् ॥ ४ ॥

अर्थानर्थौ न मे स्थित्या गत्या न शयनेन वा ॥
तिष्ठन् गच्छन् स्वपंस्तस्मादहमासे यथासुखम् ॥ ५ ॥
स्वपतो नास्ति मे हानिः सिद्धिर्यत्नवतो न वा ॥
नाशोल्लासौ विहायास्मादहमासे यथासुखम् ॥ ६ ॥
सुखादिरूपानियमं भावेष्वालोक्य भूरिशः ॥
शुभाशुभे विहायास्मादहमासे यथासुखम् ॥ ७ ॥

इति त्रयोदशोऽध्यायः ॥ १३ ॥

---

प्रकृत्या शून्यचित्तो यः प्रमादाद्भावभावनः ॥
निद्रितो बोधित इव क्षीणसंसरणो हि सः ॥ १ ॥
क्व धनानि क्व मित्राणि क्व मे विषयदस्यवः ॥
क्व शास्त्रं क्व च विज्ञानं यदा मे गलिता स्पृहा ॥ २ ॥
विज्ञाते साक्षिपुरुषे परमात्मनि चेश्वरे ॥
नैराश्ये बंधमोक्षे च न चिंता मुक्तये मम ॥ ३ ॥
अंतर्विकल्पशून्यस्य बहिः स्वच्छंदचारिणः ॥
भ्रांतस्येव दशास्तास्तास्तादृशा एव जानते ॥ ४ ॥

इति चतुर्दशोऽध्यायः ॥ १४ ॥

---

यथातथोपदेशेन कृतार्थः सत्त्वबुद्धिमान् ॥
आजीवमपि जिज्ञासुः परस्तत्र विमुह्यति ॥ १ ॥
मोक्षो विषयवैरस्यं बंधो वैषयिको रसः ॥
एतावदेव विज्ञानं यथेच्छसि तथा कुरु ॥ २ ॥
वाग्मिप्राज्ञमहोद्योगं जनं मूकजडालसम् ॥
करोति तत्त्वबोधोऽयमतस्त्यक्तो बुभुक्षुभिः ॥ ३ ॥
न त्वं देहो न ते देहो भोक्ता कर्ता न वा भवान् ॥
चिद्रूपोऽसि सदा साक्षी निरपेक्षः सुखं चर ॥ ४ ॥

रागद्वेषौ मनोधर्मौ न मनस्ते कदाचन ॥
निर्विकल्पोऽसि बोधात्मा निर्विकारः सुखं चर ॥५॥
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥
विज्ञाय निरहंकारो निर्ममत्वं सुखी भव ॥ ६ ॥
विश्वं स्फुरति यत्रेदं तरंगा इव सागरे ॥
तत्त्वमेव न संदेहश्चिन्मूर्ते विज्वरो भव ॥ ७ ॥
श्रद्धस्व तात श्रद्धस्व नात्र मोहं कुरुष्व भोः ॥
ज्ञानस्वरूपो भगवानात्मा त्वं प्रकृतेः परः ॥ ८ ॥
गुणैः संवेष्टितो देहस्तिष्ठत्यायाति याति च ॥
आत्मा न गंता नागंता किमेनमनुशोचसि ॥ ९ ॥
देहस्तिष्ठतु कल्पान्तं गच्छत्वद्यैव वा पुनः ॥
क्व वृद्धिः क्व च वा हानिस्तव चिन्मात्ररूपिणः ॥ १० ॥
त्वय्यनंतमहांभोधौ विश्वविचिः स्वभावतः ॥
उदेतु वास्तमायातु न ते वृद्धिर्न वा क्षतिः ॥ ११ ॥
तात चिन्मात्ररूपोऽसि न ते भिन्नमिदं जगत् ॥
अतः कस्य कथं कुत्र हेयोपादेयकल्पना ॥ १२ ॥
एकस्मिन्नव्यये शान्ते चिदाकाशेऽमले त्वयि ॥
कुतो जन्म कुतो धर्मः कुतोऽहंकार एव च ॥ १३ ॥
यत्त्वं पश्यसि तत्रैकस्त्वमेव प्रतिभाससे ॥
किं पृथग्भासते स्वर्णात्कटकांगदनूपुरम् ॥ १४ ॥
अयं सोऽहमयं नाहं विभागमिति संत्यज ॥
सर्वमात्मेति निश्चित्य निःसंकल्पः सुखी भव ॥ १५ ॥
तवैवाज्ञानतो विश्वं त्वमेकः परमार्थतः ॥
त्वत्तोऽन्यो नास्ति संसारी नासंसारी च कश्चन ॥१६॥
भ्रांतिमात्रमिदं विश्वं न किंचिदिति निश्चयी ॥
निर्वासनः स्फूर्तिमात्रो न किंचिदिव शाम्यति ॥ १७

एक एव भवांभोधावासीदस्ति भविष्यति ॥
न ते बंधोऽस्ति मोक्षो वा कृत्यकृत्यः सुखं चर ॥१८॥
मा संकल्पविकल्पाभ्यां चित्तं क्षोभय चिन्मय ॥
उपशाम्य सुखं तिष्ठ स्वात्मन्यानन्दविग्रहे ॥ १९ ॥
त्यजैव ध्यानं सर्वत्र मा किंचिद्धृदि धारय ॥
आत्मा त्वं मुक्त एवासि किं विमृश्य करिष्यसि ॥२०॥

इति पंचदशोऽध्यायः ॥ १५ ॥

---

आचक्ष्व शृणु वा तात नानाशास्त्राण्यनेकशः ॥
तथापि न तव स्वास्थ्यं सर्वविस्मरणादृते ॥ १ ॥
भोगं कर्मसमाधिं वा कुरु विज्ञ तथापि ते ॥
चित्तं निरस्तसर्वाशमत्यर्थं रोचयिष्यति ॥ २ ॥
आयासात्सकलो दुःखी नैनं जानाति कश्चन ॥
अनेनैवोपदेशेन धन्यः प्राप्नोति निर्वृतिम् ॥ ३ ॥
व्यापारे खिद्यते यस्तु निमेषोन्मेषयोरपि ॥
तस्यालस्यधुरीणस्य सुखं नान्यस्य कस्यचित् ॥ ४ ॥
इदं कृतमिदं नेति द्वंद्वैर्मुक्तं यदा मनः ॥
धर्मार्थकाममोक्षेषु निरपेक्षं तदा भवेत् ॥ ५ ॥
विरक्तो विषयद्वेष्टा रागी विषयलोलुपः ॥
ग्रहमोक्षविहीनस्तु न विरक्तो न रागवान् ॥ ६ ॥
हेयोपादेयता तावत्संसारविटपांकुरः ॥
स्पृहा जीवति यावद्वै निर्विचारदशास्पदम् ॥ ७ ॥
प्रवृत्तौ जायते रागो निवृत्तौ द्वेष एव हि ॥
निर्द्वंद्वो बालवद्धीमानेवमेव व्यवस्थितः ॥ ८ ॥
हातुमिच्छति संसारं रागी दुःखजिहासया ॥
वीतरागो हि निर्दुःखस्तस्मिन्नपि न खिद्यति ॥ ९ ॥

यस्याभिमानो मोक्षेऽपि देहेऽपि ममता तथा ॥
न च ज्ञानी न वा योगी केवलं दुःखभागसौ ॥ १० ॥
हरो यद्युपदेष्टा ते हरिः कमलजोऽपि वा ॥
तथापि न तव स्वास्थ्यं सर्वविस्मरणादृते ॥ ११ ॥
इति षोडशोऽध्यायः ॥ १६ ॥

---

तेन ज्ञानफलं प्राप्तं योगाभ्यासफलं तथा ॥
तृप्तः स्वच्छेंद्रियो नित्यमेकाकी रमते तु यः ॥ १ ॥
न कदाचिज्जगत्यस्मिंस्तत्त्वज्ञो हंत खिद्यति ॥
यत एकेन तेनेदं पूर्णं ब्रह्मांडमंडलम् ॥ २ ॥
न जातु विषयाः केऽपि स्वारामं हर्षयन्त्यमी ॥
सल्लकीपल्लवप्रीतमिवेभं निंबपल्लवाः ॥ ३ ॥
यस्तु भोगेषु भुक्तेषु न भवत्याधिवासिता ॥
अभुक्तेषु निराकांक्षी तादृशो भव दुर्लभः ॥ ४ ॥
बुभुक्षुरिह संसारे मुमुक्षुरपि दृश्यते ॥
भोगमोक्षनिराकांक्षी विरलो हि महाशयः ॥ ५ ॥
धर्मार्थकाममोक्षेषु जीविते मरणे तथा ॥
कस्याप्युदारचित्तस्य हेयोपादेयता न हि ॥ ६ ॥
वांछा न विश्वविलये न द्वेषस्तस्य च स्थितौ ॥
यथा जीविकया तस्माद्धन्य आस्ते यथासुखम् ॥ ७ ॥
कृतार्थोऽनेन ज्ञानेनेत्येवं गलितधीः कृती ॥
पश्यन्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्नास्ते यथासुखम् ॥ ८ ॥
शून्या दृष्टिर्वृथा चेष्टा विकलानींद्रियाणि च ॥
न स्पृहा न विरक्तिर्वा क्षीणसंसारसागरे ॥ ९ ॥
न जागर्ति न निद्राति नोन्मीलति न मीलति ॥
अहो परदशा क्वापि वर्तते मुक्तचेतसः ॥ १० ॥

सर्वत्र दृश्यते स्वस्थः सर्वत्र विमलाशयः ॥
समस्तवासनामुक्तो मुक्तः सर्वत्र राजते ॥ ११ ॥
पश्यन्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गृह्णन्वदन्व्रजन् ॥
ईहितानीहितैर्मुक्तो मुक्त एव महाशयः ॥ १२ ॥
न निंदति न च स्तौति न हृष्यति न कुप्यति ॥
न ददाति न गृह्णाति मुक्तः सर्वत्र नीरसः ॥ १३ ॥
सानुरागां स्त्रियं दृष्ट्वा मृत्युं वा समुपस्थितम् ॥
अविह्वलमनाः स्वस्थो मुक्त एव महाशयः ॥ १४ ॥
सुखे दुःखे नरे नार्यां संपत्सु च विपत्सु च ॥
विशेषो नैव धीरस्य सर्वत्र समदर्शिनः ॥ १५ ॥
न हिंसा नैव कारुण्यं नौद्धत्यं न च दीनता ॥
नाश्चर्यं नैव च क्षोभः क्षीणसंसरणे नरे ॥ १६ ॥
न मुक्तो विषयद्वेष्टा न वा विषयलोलुपः ॥
असंसक्तमना नित्यं प्राप्ताप्राप्तमुपाश्नुते ॥ १७ ॥
समाधानासमाधानहिताहितविकल्पनाम् ॥
शून्यचित्तो न जानाति कैवल्यमिव संस्थितः ॥ १८ ॥
निर्ममो निरहंकारो न किंचिदिति निश्चितः ॥
अंतर्गलितसर्वाशः कुर्वन्नापि करोति न ॥ १९ ॥
मनःप्रकाशसंमोहस्वप्नजाड्यविवर्जितः ॥
दशां कामपि संप्राप्तो भवेद्गलितमानसः ॥ २० ॥

इति सप्तदशोऽध्यायः ॥ १७ ॥

---

यस्य बोधोदये तावत्स्वप्नवद्भवति भ्रमः ॥
तस्मै सुखैकरूपाय नमः शान्ताय तेजसे ॥ १ ॥
अर्जयित्वाखिलानर्थान् भोगानाप्नोति पुष्कलान् ॥
न हि सर्वपरित्यागमन्तरेण सुखी भवेत् ॥ २ ॥

कर्तव्यदुःखमार्तंडज्वालादग्धान्तरात्मनः ॥
कुतः प्रशमपीयूषधारासारमृते सुखम् ॥ ३ ॥
भवोऽयं भावनामात्रो न किंचित्परमार्थतः ॥
नास्त्यभावः स्वभावानां भावाभावविभाविनाम् ॥ ४ ॥
न दूरं न च संकोचाल्लब्धमेवात्मनः पदम् ॥
निर्विकल्पं निरायासं निर्विकारं निरंजनम् ॥ ५ ॥
व्यामोहमात्रविरतौ स्वरूपादानमात्रतः ॥
वीतशोका विराजन्ते निरावरणदृष्टयः ॥ ६ ॥
समस्तं कल्पनामात्रमात्मा मुक्तः सनातन ॥
इति विज्ञाय धीरो हि किमभ्यस्यति बालवत् ॥ ७ ॥
आत्मा ब्रह्मेति निश्चित्य भावाभावौ च कल्पितौ ॥
निष्कामः किं विजानाति किं ब्रूते च करोति किम् ॥ ८ ॥
अयं सोऽहमयं नाहमिति क्षीणा विकल्पनाः ॥
सर्वमात्मेति निश्चित्य तूष्णींभूतस्य योगिनः ॥ ९ ॥
न विक्षेपो न चैकाग्र्यं नातिबोधो न मूढता ॥
न सुखं न च वा दुःखमुपशान्तस्य योगिनः ॥ १० ॥
स्वाराज्ये भैक्ष्यवृत्तौ च लाभालाभे जने वने ॥
निर्विकल्पस्वभावस्य न विशेषोऽस्ति योगिनः ॥ ११ ॥
क्व धर्मः क्व च वा कामः क्व चार्थः क्व विवेकिता ॥
इदं कृतमिदं नेति द्वंद्वैर्मुक्तस्य योगिनः ॥ १२ ॥
कृत्यं किमपि नैवास्ति न कापि हृदि रंजना ॥
यथा जीवनमेवेह जीवन्मुक्तस्य योगिनः ॥ १३ ॥
क्व मोहः क्व च वा विश्वं क्व तद्ध्यानं क्व मुक्तता ॥
सर्वसंकल्पसीमायां विश्रांतस्य महात्मनः ॥ १४ ॥
येन विश्वमिदं दृष्टं स नास्तीति करोतु वै ॥
निर्वासनः किं कुरुते पश्यन्नपि न पश्यति ॥ १५ ॥

येन दृष्टं परं ब्रह्म सोऽहं ब्रह्मेति चिंतयेत् ॥
किं चिंतयति निश्चिंतो द्वितीयं यो न पश्यति ॥ १६ ॥
दृष्टो येनात्मविक्षेपो निरोधं कुरुते त्वसौ ॥
उदारस्तु न विक्षिप्तः साध्याभावात्करोति किम् ॥१७॥
धीरो लोकविपर्यस्तो वर्तमानोऽपि लोकवत् ॥
न समाधिं न विक्षेपं न लेपं स्वस्य पश्यति ॥ १८ ॥
भावाभावविहीनो यस्तृप्तो निर्वासनो बुधः ॥
नैव किंचित्कृतं तेन लोकदृष्ट्या विकुर्वता ॥ १९ ॥
प्रवृत्तौ वा निवृत्तौ वा नैव धीरस्य दुर्ग्रहः ॥
यदा यत्कर्तुमायाति तत्कृत्वा तिष्ठते सुखम् ॥ २० ॥
निर्वासनो निरालंबः स्वच्छंदो मुक्तबंधनः ॥
क्षिप्तः संस्कारवातेन चेष्टते शुष्कपर्णवत् ॥ २१ ॥
असंसारस्य तु क्वापि न हर्षो न विषादता ॥
स शीतलमना नित्यं विदेह इव राजते ॥ २२ ॥
कुत्रापि न जिहासास्ति नाशो वापि न कुत्रचित् ॥
आत्मारामस्य धीरस्य शीतलाच्छतरात्मनः ॥२३॥
प्रकृत्या शून्यचित्तस्य कुर्वतोऽस्य यदृच्छया ॥
प्राकृतस्येव धीरस्य न मानो नावमानता ॥ २४ ॥
कृतं देहेन कर्मेदं न मया शुद्धरूपिणा ॥
इति चिंतानुरोधी यः कुर्वन्नपि करोति न ॥ २५ ॥
अतद्वादीव कुरुते न भवेदपि बालिशः ॥
जीवन्मुक्तः सुखी श्रीमान् संसरन्नपि शोभते ॥ २६ ॥
नानाविचारसुश्रान्तो धीरो विश्रान्तिमागतः ॥
न कल्पते न जानाति न शृणोति न पश्यति ॥ २७ ॥
असमाधेरविक्षेपान्न मुमुक्षुर्न चेतरः ॥
निश्चित्य कल्पितं पश्यन्ब्रह्मैवास्ते महाशयः ॥ २८ ॥

यस्यांतः स्यादहंकारो न करोति करोति सः ॥
निरहंकारधीरेण यत्किंचिदकृतं कृतम् ॥ २९ ॥
नोद्विग्नं न च संतुष्टमकर्तृ स्पंदवर्जितम् ॥
निराशं गतसंदेहं चित्तं मुक्तस्य राजते ॥ ३० ॥
निर्ध्यातुं चेष्टितुं वापि यच्चित्तं न प्रवर्तते ॥
निर्निमित्तमिदं किंतु निर्ध्यायति विचेष्टते ॥ ३१ ॥
तत्त्वं यथार्थमाकर्ण्य मंदः प्राप्नोति मूढताम् ॥
अथवा याति संकोचममूढः कोऽपि मूढवत् ॥ ३२ ॥
एकाग्रता निरोधो वा मूढैरभ्यस्यते भृशम् ॥
धीराः कृत्यं न पश्यन्ति सुप्तवत्स्वपदे स्थिताः ॥ ३३ ॥
अप्रयत्नात्प्रयत्नाद्वा मूढो नाप्नोति निर्वृतिम् ॥
तत्त्वनिश्चयमात्रेण प्राज्ञो भवति निर्वृतः ॥ ३४ ॥
शुद्धं बुद्धं प्रियं पूर्णं निष्प्रपंचं निरामयम् ॥
आत्मानं तं न जानन्ति तत्राभ्यासपरा जनाः ॥ ३५ ॥
नाप्नोति कर्मणा मोक्षं विमूढोऽभ्यासरूपिणा ॥
धन्यो विज्ञानमात्रेण मुक्तस्तिष्ठत्यविक्रियः ॥ ३६ ॥
मूढो नाप्नोति तद्ब्रह्म यतो भवितुमिच्छति ॥
अनिच्छन्नपि धीरो हि परब्रह्मस्वरूपभाक् ॥ ३७ ॥
निराधारा ग्रहव्यग्रा मूढाः संसारपोषकाः ॥
एतस्यानर्थमूलस्य मूलच्छेदः कृतो बुधैः ॥ ३८ ॥
न शान्तिं लभते मूढो यतः शमितुमिच्छति ॥
धीरस्तत्त्वं विनिश्चित्य सर्वदा शान्तमानसः ॥ ३९ ॥
क्वात्मनो दर्शनं तस्य यो दृष्टमवलंबते ॥
धीरास्तं तं न पश्यन्ति पश्यन्त्यात्मानमव्ययम् ॥ ४० ॥
क्व निरोधो विमूढस्य यो निर्बंधं करोति वै ॥
स्वारामस्यैव धीरस्य सर्वदासावकृत्रिमः ॥ ४१ ॥

भावस्य भावकः कश्चिन्न किंचिद्भावकोऽपरः ॥
उभयाभावकः कश्चिदेवमेव निराकुलः ॥ ४२ ॥
शुद्धमद्वयमात्मानं भावयन्ति कुबुद्धयः ॥
न तु जानन्ति संमोहाद्यावज्जीवमनिर्वृताः ॥ ४३ ॥
मुमुक्षोर्बुद्धिरालंबमन्तरेण न विद्यते ॥
निरालंबैव निष्कामा बुद्धिर्मुक्तस्य सर्वदा ॥ ४४ ॥
विषयद्वीपिनो वीक्ष्य चकिताः शरणार्थिनः ॥
विशन्ति झटिति क्रोडं निरोधैकाग्रसिद्धये ॥ ४५ ॥
निर्वासनं हरिं दृष्ट्वा तूष्णीं विषयदन्तिनः ॥
पलायन्ते न शक्तास्ते सेवन्ते कृतचाटवः ॥ ४६ ॥
न मुक्तिकारिकां धत्ते निःशंको युक्तमानसः ॥
पश्यन्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्नास्ते यथासुखम् ॥ ४७ ॥
वस्तुश्रवणमात्रेण शुद्धबुद्धिर्निराकुलः ॥
नैवाचारमनाचारमौदास्यं वा प्रपश्यति ॥ ४८ ॥
यदा यत्कर्तुमायाति तदा तत्कुरुते ऋजुः ॥
शुभं वाप्यशुभं वापि तस्य चेष्टा हि बालवत् ॥ ४९ ॥
स्वातंत्र्यात्सुखमाप्नोति स्वातंत्र्याल्लभते परम् ॥
स्वातंत्र्यान्निर्वृतिं गच्छेत्स्वातंत्र्यात्परमं पदम् ॥ ५० ॥
अकर्तृत्वमभोक्तृत्वं स्वात्मनो मन्यते यदा ॥
तदा क्षीणा भवन्त्येव समस्ताश्चित्तवृत्तयः ॥ ५१ ॥
उच्छृंखलाप्यकृतिका स्थितिर्धीरस्य राजते ॥
न तु सस्पृहचित्तस्य शान्तिर्मूढस्य कृत्रिमा ॥ ५२ ॥
विलसन्ति महाभोगैर्विशन्ति गिरिगह्वरान् ॥
निरस्तकल्पना धीरा अबद्धा मुक्तबुद्धयः ॥ ५३ ॥
श्रोत्रियं देवतां तीर्थमंगनां भूपतिं प्रियम् ॥
दृष्ट्वा संपूज्य धीरस्य न कापि हृदि वासना ॥ ५४ ॥

भृत्यैः पुत्रैः कलत्रैश्च दौहित्रैश्चापि गोत्रजैः ॥
विहस्य धिक्कृतो योगी न याति विकृतिं मनाक् ॥५५॥
संतुष्टोऽपि न संतुष्टः खिन्नोऽपि च न खिद्यते ॥
तस्याश्चर्यदशां तां तां तादृशा एव जानते ॥ ५६ ॥
कर्तव्यतैव संसारो न तां पश्यन्ति सूरयः ॥
शून्याकारा निराकारा निर्विकारा निरामयाः ॥ ५७ ॥
अकुर्वन्नपि संभोक्षाद् व्यग्रः सर्वत्र मूढधीः ॥
कुर्वन्नपि तु कृत्यानि कुशलो हि निराकुलः ॥ ५८ ॥
सुखमास्ते सुखं शेते सुखमायाति याति च ॥
सुखं वक्ति सुखं भुंक्ते व्यवहारेऽपि शान्तधीः ॥ ५९ ॥
स्वभावाद्यस्य नैवार्तिर्लोकवद्व्यवहारिणः ॥
महाह्रद इवाक्षोभ्यो गतक्लेशः स शोभते ॥ ६० ॥
निवृत्तिरपि मूढस्य प्रवृत्तिरुपजायते ॥
प्रवृत्तिरपि धीरस्य निवृत्तिफलभागिनी ॥ ६१ ॥
परिग्रहेषु वैराग्यं प्रायो मूढस्य दृश्यते ॥
देहे विगलिताशस्य क्व रागः क्व विरागता ॥ ६२ ॥
भावनाभावनासक्ता दृष्टिर्मूढस्य सर्वदा ॥
भाव्यभावनया सा तु स्वस्थस्यादृष्टिरूपिणी ॥ ६३ ॥
सर्वारंभेषु निष्कामो यश्चरेद्बालवन्मुनिः ॥
न लेपस्तस्य शुद्धस्य क्रियमाणेऽपि कर्मणि ॥ ६४ ॥
स एव धन्य आत्मज्ञः सर्वभावेषु यः समः ॥
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्निस्तर्षमानसः ॥ ६५ ॥
क्व संसारः क्व चाभासः क्व साध्यं क्व च साधनम् ॥
आकाशस्येव धीरस्य निर्विकल्पस्य सर्वदा ॥ ६६ ॥
स जयत्यर्थसंन्यासी पूर्णस्वरसविग्रहः ॥
अकृत्रिमोऽनवच्छिन्नो समाधिर्यस्य वर्तते ॥ ६७ ॥

बहुनात्र किमुक्तेन ज्ञाततत्त्वो महाशयः ॥
भोगमोक्षनिराकांक्षी सदा सर्वत्र नीरसः ॥ ६८ ॥
महदादि जगद्द्वैतं नाममात्रविजृंभितम् ॥
विहाय शुद्धबोधस्य किं कृत्यमवशिष्यते ॥ ६९ ॥
भ्रमभूतमिदं सर्वं किंचिन्नास्तीति निश्चयी ॥
अलक्ष्यस्फुरणः शुद्धः स्वभावेनैव शाम्यति ॥ ७० ॥
शुद्धस्फुरणरूपस्य दृश्यभावमपश्यतः ॥
क्व विधिः क्व च वैराग्यं क्व त्यागः क्व शमोऽपि वा ७१
स्फुरतोऽनन्तरूपेण प्रकृतिं च न पश्यतः ॥
क्व बंधः क्व च वा मोक्षः क्व हर्षः क्व विषादता ॥ ७२॥
बुद्धिपर्यन्तसंसारे मायामात्रं विवर्तते ॥
निर्ममो निरहंकारो निष्कामः शोभते बुधः ॥ ७३ ॥
अक्षयं गतसंतापमात्मानं पश्यतो मुनेः ॥
क्व विद्या क्व च वा विश्वं क्व देहोऽहं ममेति वा ॥७४॥
निरोधादीनि कर्माणि जहाति जडधीर्यदि ॥
मनोरथान्प्रलापांश्च कर्तुमाप्नोत्यतत्क्षणात् ॥ ७५ ॥
मन्दः श्रुत्वापि तद्वस्तु न जहाति विमूढताम् ॥
निर्विकल्पो बहिर्यत्नादन्तर्विषयलालसः ॥ ७६ ॥
ज्ञानाद्गलितकर्मा यो लोकदृष्ट्यापि कर्मकृत् ॥
नाप्नोत्यवसरं कर्तुं वक्तुमेव न किंचन ॥ ७७ ॥
क्व तमः क्व प्रकाशो वा हानं क्व च न किंचन ॥
निर्विकारस्य धीरस्य निरातंकस्य सर्वदा ॥ ७८ ॥
क्व धैर्यं क्व विवेकित्वं क्व निरातंकतापि वा ॥
अनिर्वाच्यस्वभावस्य निःस्वभावस्य योगिनः ॥७९॥
न स्वर्गो न च नरको जीवन्मुक्तिर्न चैव हि ॥
बहुनात्र किमुक्तेन योगदृष्ट्या न किंचन ॥ ८० ॥

नैव प्रार्थयते लाभं नालाभे नानुशोचति ॥
धीरस्य शीतलं चित्तममृतेनैव पूरितम् ॥ ८१ ॥
न शान्तं स्तौति निष्कामो न दुष्टमपि निन्दति ॥
समदुःखसुखस्तृप्तः किंचित्कृत्यं न पश्यति ॥ ८२ ॥
धीरो न द्वेष्टि संसारमात्मानं न दिदृक्षति ॥
हर्षामर्षविनिर्मुक्तो न मृतो न च जीवति ॥ ८३ ॥
निःस्नेहः पुत्रदारादौ निष्कामो विषयेषु च ॥
निश्चिन्तः स्वशरीरेऽपि निराशः शोभते बुधः ॥ ८४ ॥
तुष्टिः सर्वत्र धीरस्य यथापतितवर्तिनः ॥
स्वच्छंदं चरतो देशान्यत्रस्तामितशायिनः ॥ ८५ ॥
पततूदेतु वा देहो नास्य चिन्ता महात्मनः ॥
स्वभावभूमिविश्रान्तिविस्मृताशेषसंसृतेः ॥ ८६ ॥
अकिंचनः कामचारो निर्द्वंद्वश्छिन्नसंशयः ॥
असक्तः सर्वभावेषु केवलो रमते बुधः ॥ ८७ ॥
निर्ममः शोभते धीरः समलोष्टाश्मकांचनः ॥
सुभिन्नहृदयग्रंथिर्विनिर्धूतरजस्तमः ॥ ८८ ॥
सर्वत्रानवधानस्य न किंचिद्वासना हृदि ॥
मुक्तात्मनो वितृप्तस्य तुलना केन जायते ॥ ८९ ॥
जानन्नपि न जानाति पश्यन्नपि न पश्यति ॥
ब्रुवन्नपि न च ब्रूते कोऽन्यो निर्वासनादृते ॥ ९० ॥
भिक्षुर्वा भूपतिर्वापि यो निष्कामः स शोभते ॥
भावेषु गलिता यस्य शोभनाशोभना मतिः ॥ ९१ ॥
क्व स्वाच्छंद्यं क्व संकोचः क्व वा तत्त्वविनिश्चयः ॥
निर्व्याजार्जवभूतस्य चरितार्थस्य योगिनः ॥ ९२ ॥
आत्मविश्रांतितृप्तेन निराशेन गतार्तिना ॥
अंतर्यदनुभूयेत तत्कथं कस्य कथ्यते ॥ ९३ ॥

सुप्तोऽपि न सुषुप्तौ च स्वप्नेऽपि शयितो न च ॥
जागरेऽपि न जागर्ति धीरस्तृप्तः पदे पदे ॥ ९४ ॥
ज्ञः सचिंतोऽपि निश्चिंतः सेंद्रियोऽपि निरिंद्रियः ॥
सुबुद्धिरपि निर्बुद्धिः साहंकारोऽनहंकृतिः ॥ ९५ ॥
न सुखी न च वा दुःखी न विरक्तो न संगवान् ॥
न मुमुक्षुर्न वा मुक्तो न किंचिन्न च किंचन ॥ ९६ ॥
विक्षेपेऽपि न विक्षिप्तः समाधौ न समाधिमान् ॥
जाड्येऽपि न जडो धन्यः पांडित्येऽपि न पंडितः ॥ ९७
मुक्तो यथास्थितिस्वस्थः कृतकर्तव्यनिर्वृतः ॥
समः सर्वत्र वैतृष्ण्यान्न स्मरत्यकृतं कृतम् ॥ ९८ ॥
न प्रीयते वन्द्यमानो निन्द्यमानो न कुप्यति ॥
नैवोद्विजति मरणे जीवने नाभिनन्दति ॥ ९९ ॥
न धावति जनाकीर्णं नारण्यमुपशान्तधीः ॥
यथा तथा यत्र तत्र सम एवावतिष्ठते ॥ १०० ॥

इति अष्टादशोऽध्यायः ॥ १८ ॥

---

तत्त्वविज्ञानसंदंशमादाय हृदयोदरात् ॥
नानाविधपरामर्शशल्योद्धारः कृतो मया ॥ १ ॥
क्व धर्मः क्व च वा कामः क्व चार्थः क्व विवेकिता ॥
क्व द्वैतं क्व च वाऽद्वैतं स्वमहिम्नि स्थितस्य मे ॥ २
क्व भूतं क्व भविष्यद्वा वर्तमानमपि क्व वा ॥
क्व देशः क्व च वा नित्यं स्वमहिम्नि स्थितस्य मे ॥३॥
क्व चात्मा क्व च वानात्मा क्व शुभं क्वाशुभं तथा ॥
क्व चिंता क्व च वाचिंता स्वमहिम्नि स्थितस्य मे ॥४॥
क्व स्वप्नः क्व सुषुप्तिर्वा क्व च जागरणं तथा ॥
क्व तुरीयं भयं वापि स्वमहिम्नि स्थितस्य मे ॥ ५ ॥

क्व दूरं क्व समीपं वा बाह्यं क्वाभ्यन्तरं क्व वा ॥
क्व स्थूलं क्व च वा सूक्ष्मं स्वमहिम्नि स्थितस्य मे ॥६॥
क्व मृत्युर्जीवितं वा क्व लोकाः क्वास्य क्व लौकिकम् ॥
क्व लयः क्व समाधिर्वा स्वमहिम्नि स्थितस्य मे ॥ ७ ॥
अलं त्रिवर्गकथया योगस्य कथयाप्यलम् ॥
अलं विज्ञानकथया विश्रान्तस्य ममात्मनि ॥ ८ ॥

इति एकोनविंशोऽध्यायः ॥ १९ ॥

---

क्व भूतानि क्व देहो वा क्वेंद्रियाणि क्व वा मनः ॥
क्व शून्यं क्व च नैराश्यं मत्स्वरूपे निरंजने ॥ १ ॥
क्व शास्त्रं क्वात्मविज्ञानं क्व वा निर्विषयं मनः ॥
क्व तृप्तिः क्व वितृष्णात्वं गतद्वंद्वस्य मे सदा ॥ २ ॥
क्व विद्या क्व च वाविद्या क्वाहं क्वेदं मम क्व वा ॥
क्व बंधः क्व च वा मोक्षः स्वरूपस्य क्व रूपिता ॥ ३ ॥
क्व प्रारब्धानि कर्माणि जीवन्मुक्तिरपि क्व वा ॥
क्व तद्विदेहकैवल्यं निर्विशेषस्य सर्वदा ॥ ४ ॥
क्व कर्ता क्व च वा भोक्ता निष्क्रियं स्फुरणं क्व वा ॥
क्वापरोक्षं फलं वा क्व निःस्वभावस्य मे सदा ॥ ५ ॥
क्व लोकः क्व मुमुक्षुर्वा क्व योगी ज्ञानवान् क्व वा ॥
क्व बद्धः क्व च वा मुक्तः स्वस्वरूपेऽहमद्वये ॥ ६ ॥
क्व सृष्टिः क्व च संहारः क्व साध्यं क्व च साधनम् ॥
क्व साधकः क्व सिद्धिर्वा स्वस्वरूपेऽहमद्वये ॥ ७ ॥
क्व प्रमाता प्रमाणं वा क्व प्रमेयं क्व च प्रमा ॥
क्व किंचित्क्व न किंचिद्वा सर्वदा विमलस्य मे ॥ ८ ॥
क्व विक्षेपः क्व चैकाग्र्यं क्व निर्बोधः क्व मूढता ॥
क्व हर्षः क्व विषादो वा सर्वदा निष्क्रियस्य मे ॥ ९ ॥

क्व चैष व्यवहारो वा क्व च सा परमार्थता ॥
क्व सुखं क्व च वा दुःखं निर्विमर्शस्य मे सदा ॥ १०॥
क्व माया क्व च संसारः क्व प्रीतिर्विरतिः क्व वा ॥
क्व जीवः क्व च तद्ब्रह्म सर्वदा विमलस्य मे ॥११॥
क्व प्रवृत्तिर्निर्वृत्तिर्वा क्व मुक्तिः क्व च बन्धनम् ॥
कूटस्थनिर्विभागस्य स्वस्थस्य मम सर्वदा ॥ १२ ॥
क्वोपदेशः क्व वा शास्त्रं क्व शिष्यः क्व च वा गुरुः ॥
क्व चास्ति पुरुषार्थो वा निरुपाधेः शिवस्य मे ॥ १३॥
क्व चास्ति क्व च वा नास्ति क्वास्ति चैकं क्व च द्वयम्
बहुनात्र किमुक्तेन किंचिन्नोत्तिष्ठते मम ॥ १४ ॥

इति विंशोऽध्यायः ॥ २० ॥

---

दश षट् चोपदेशे स्युः श्लोकाश्च पंचविंशतिः ॥
सत्यात्मानुभवोल्लास उपदेशे चतुर्दश ॥ १ ॥
षडुल्लासे लये चैवोपदेशे च चतुश्चतुः ॥
पंचकं स्यादनुभवे बंधमोक्षे चतुष्ककम् ॥ २ ॥
निर्वेदोपशमे ज्ञाने एवमेवाष्टकं भवेत् ॥
यथासुखे सप्तकं च शान्तौ स्याद्वेदसंमितम् ॥ ३ ॥
तत्रोपदेशे विंशश्च दश ज्ञानोपदेशके ॥
तत्त्वस्वरूपे विंशश्च शमे च शतकं भवेत् ॥ ४ ॥
अष्टकं चात्मविश्रान्तौ जीवन्मुक्तौ चतुर्दश ॥
षट्संख्याक्रमविज्ञाने ग्रंथैकात्म्ये ततः परम् ॥ ५ ॥
विंशत्येकमितैः खंडैः श्लोकैरात्माग्निमध्यगैः ॥
अवधूतानुभूतेश्च श्लोकाः संख्याक्रमा अमी ॥ ६ ॥

इति एकविंशोऽध्यायः ॥ २१ ॥

॥ इति अष्टावक्रगीता समाप्ता ॥

---

## ॥ अथ अवधूतगीता प्रारभ्यते ॥

ईश्वरानुग्रहादेव पुंसामद्वैतवासना ॥
महद्भयपरित्राणाद्विप्राणामुपजायते ॥ १ ॥
येनेदं पूरितं सर्वमात्मनैवात्मनात्मनि ॥
निराकारं कथं वन्दे ह्यभिन्नं शिवमव्ययम् ॥ २ ॥
पञ्चभूतात्मकं विश्वं मरीचिजलसन्निभम् ॥
कस्याप्यहो नमस्कुर्यामहमेको निरञ्जनः ॥ ३ ॥
आत्मैव केवलं सर्वं भेदाभेदो न विद्यते ॥
अस्ति नास्ति कथं ब्रूयां विस्मयः प्रतिभाति मे ॥४॥
वेदान्तसारसर्वस्वं ज्ञानं विज्ञानमेव च ॥
अहमात्मा निराकारः सर्वव्यापी स्वभावतः ॥ ५ ॥
यो वै सर्वात्मको देवो निष्कलो गगनोपमः ॥
स्वभावनिर्मलः शुद्धः स एवाहं न संशयः ॥ ६ ॥
अहमेवाव्ययोऽनन्तः शुद्धविज्ञानविग्रहः ॥
सुखं दुःखं न जानामि कथं कस्यापि वर्तते ॥ ७ ॥
न मानसं कर्म शुभाशुभं मे न कायिकं कर्म शुभाशुभं मे ॥ न वाचिकं कर्म शुभाशुभं मे ज्ञानामृतं शुद्धमतीन्द्रियोऽहम् ॥ ८ ॥
मनो वै गगनाकारं मनो वै सर्वतोमुखम् ॥
मनोऽतीतं मनः सर्वं न मनः परमार्थतः ॥ ९ ॥
अहमेकामिदं सर्वं व्योमातीतं निरन्तरम् ॥
पश्यामि कथमात्मानं प्रत्यक्षं वा तिरोहितम् ॥ १० ॥
त्वमेवमेकं हि कथं न बुध्यसे समं हि सर्वेषु विमृष्टमव्ययम् ॥ सदोदितोऽसि त्वमखण्डितः प्रभो दिवा नक्तं च कथं हि मन्यसे ॥ ११ ॥

आत्मानं सततं विद्धि सर्वत्रैकं निरंतरम् ॥
अहं ध्याता परं ध्येयमखण्डं खण्ड्यते कथम् ॥ १२ ॥
न जातो न मृतोऽसि त्वं न ते देहः कदाचन ॥
सर्वं ब्रह्मेति विख्यातं ब्रवीति बहुधा श्रुतिः ॥ १३ ॥
सबाह्याभ्यन्तरोऽसि त्वं शिवः सर्वत्र सर्वदा ॥
इतस्ततः कथं भ्रान्तः प्रधावसि पिशाचवत् ॥ १४ ॥
संयोगश्च वियोगश्च वर्तते न च ते न मे ॥
न त्वं नाहं जगन्नेदं सर्वमात्मैव केवलम् ॥ १५ ॥
शब्दादिपंचकस्यास्य नैवासि त्वं न ते पुनः ॥
त्वमेव परमं तत्त्वमतः किं परितप्यसे ॥ १६ ॥
जन्ममृत्युर्न ते चित्तं बन्धमोक्षौ शुभाशुभौ ॥
कथं रोदिषि रे वत्स नामरूपं न ते न मे ॥ १७ ॥
अहो चित्तं कथं भ्रान्तं प्रधावसि पिशाचवत् ॥
अभिन्नं पश्य चात्मानं रागत्यागात्सुखी भव ॥ १८ ॥
त्वमेव तत्त्वं हि विकारवर्जितं निष्कम्पमेकं हि विमोक्ष-
विग्रहम् । न ते च रागो ह्यथवा विरागः कथं हि
संतप्यसि कामकामतः ॥ १९ ॥
वदन्ति श्रुतयः सर्वा निर्गुणं शुद्धमव्ययम् ॥
अशरीरं समं तत्त्वं तन्मां विद्धि न संशयः ॥ २० ॥
साकारमनृतं विद्धि निराकारं निरंतरम् ॥
एतत्तत्त्वोपदेशेन न पुनर्भवसंभवः ॥ २१ ॥
एकमेव समं तत्त्वं वदन्ति हि विपश्चितः ॥
रागत्यागात्पुनश्चित्तमेकानेकं न विद्यते ॥ २२ ॥
अनात्मरूपं च कथं समाधिरात्मस्वरूपं च कथं समा-
धिः ॥ अस्तीति नास्तीति कथं समाधिर्मोक्षस्वरूपं यदि
सर्वमेकम् ॥ २३ ॥

विशुद्धोऽसि समं तत्त्वं विदेहस्त्वमजोऽव्ययः ॥
जानामीह न जानामीत्यात्मानं मन्यसे कथम् ॥ २४ ॥
तत्त्वमस्यादिवाक्येन स्वात्मा हि प्रतिपादितः ॥
नेति नेति श्रुतिर्ब्रूयादनृतं पाञ्चभौतिकम् ॥ २५ ॥
आत्मन्येवात्मना सर्वं त्वया पूर्णं निरंतरम् ॥
ध्याता ध्यानं न ते चित्तं निर्लज्जं ध्यायते कथम् ॥ २६ ॥
शिवं न जानामि कथं वदामि शिवं न जानामि कथं भजामि ॥ अहं शिवश्चेत्परमार्थतत्त्वं समस्वरूपं गगनोपमं च ॥ २७ ॥
नाहं तत्त्वं समं तत्त्वं कल्पनाहेतुवर्जितम् ॥
ग्राह्यग्राहकनिर्मुक्तं स्वसंवेद्यं कथं भवेत् ॥ २८ ॥
अनन्तरूपं न हि वस्तु किंचित्तत्त्वस्वरूपं न हि वस्तु किंचित् ॥ आत्मैकरूपं परमार्थतत्त्वं न हिंसको वापि न चाप्यहिंसा ॥ २९ ॥
विशुद्धोऽसि समं तत्त्वं विदेहमजमव्ययम् ॥
विभ्रमं कथमात्मार्थे विभ्रान्तोऽहं कथं पुनः ॥ ३० ॥
घटे भिन्ने घटाकाशं सुलीनं भेदवर्जितम् ॥
शिवेन मनसा शुद्धो न भेदः प्रतिभाति मे ॥ ३१ ॥
न घटो न घटाकाशो न जीवो जीवविग्रहः ॥
केवलं ब्रह्म संविद्धि वेद्यावेदकवर्जितम् ॥ ३२ ॥
सर्वत्र सर्वदा सर्वमात्मानं सततं ध्रुवम् ॥
सर्वं शून्यमशून्यं च तन्मां विद्धि न संशयः ॥ ३३ ॥
वेदा न लोका न सुरा न यज्ञा वर्णाश्रमो नैव कुलं न जातिः ॥ न धूममार्गो न च दीप्तिमार्गो ब्रह्मैकरूपं परमार्थतत्त्वम् ॥ ३४ ॥
व्याप्यव्यापकनिर्मुक्तं त्वमेकः सफलं यदि ॥

प्रत्यक्षं चापरोक्षं च आत्मानं मन्यसे कथम् ॥३५॥
अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ॥
समं तत्त्वं न विन्दन्ति द्वैताद्वैतविवर्जितम् ॥ ३६ ॥
श्वेतादिवर्णरहितं शब्दादिगुणवर्जितम् ॥
कथयन्ति कथं तत्त्वं मनोवाचामगोचरम् ॥ ३७ ॥
यदाऽनृतमिदं सर्वं देहादि गगनोपमम् ॥
तदा हि ब्रह्म संवेत्ति न ते द्वैतपरंपरा ॥ ३८ ॥
परेण सहजात्मापि ह्यभिन्नः प्रतिभाति मे ॥
व्योमाकारं तथैवैकं ध्याता ध्यानं कथं भवेत् ॥३९॥
यत्करोमि यदश्नामि यज्जुहोमि ददामि यत् ॥
एतत्सर्वं न मे किंचिद्विशुद्धोऽहमजोऽव्ययः ॥४०॥
सर्वं जगद्विद्धि निराकृतीदं सर्वं जगद्विद्धि विकारहीनम्॥
सर्वं जगद्विद्धि विशुद्धदेहं सर्वं जगद्वि शिवैकरूपम् ॥
तत्त्वं त्वं हि न संदेहः किं जानाम्यथवा पुनः ॥
असंवेद्यं स्वसंवेद्यमात्मानं मन्यसे कथम् ॥ ४२ ॥
माया माया कथं तात छाया छाया न विद्यते ॥
तत्त्वमेकमिदं सर्वं व्योमाकारं निरञ्जनम् ॥ ४३ ॥
आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन ॥
स्वभावनिर्मलः शुद्ध इति मे निश्चिता मतिः ॥ ४४ ॥
महदादि जगत्सर्वं न किंचित्प्रतिभाति मे ॥
ब्रह्मैव केवलं सर्वं कथं वर्णाश्रमास्थितिः ॥ ४५ ॥
जानामि सर्वथा सर्वमहमेको निरन्तरम् ॥
निरालम्बमशून्यं स शून्यं व्योमादिपञ्चकम् ॥ ४६ ॥
न षण्ढो न पुमान्न स्त्री न बोधो नैव कल्पना ॥
सानन्दो वा निरानन्दमात्मानं मन्यसे कथम् ॥४७॥
षडङ्गयोगान्न तु नैव शुद्धं मनोविनाशान्न तु नैव

शुद्धम् ॥ गुरूपदेशान्न तु नैव शुद्धं स्वयं च तत्त्वं
स्वयमेव बुद्धम् ॥४८॥
न हि पञ्चात्मको देहो विदेहो वर्तते न हि ॥
आत्मैव केवलं सर्वं तुरीयं च त्रयं कथम् ॥ ४९ ॥
न बद्धो नैव मुक्तोऽहं न चाहं ब्राह्मणः पृथक् ॥
न कर्ता न च भोक्ताहं व्याप्यव्यापकवर्जितः ॥५०॥
यथा जलं जले न्यस्तं सलिलं भेदवर्जितम् ॥
प्रकृतिं पुरुषं तद्वदभिन्नं प्रतिभाति मे ॥ ५१ ॥
यदि नाम न मुक्तोऽसि न बद्धोऽसि कदाचन ॥
साकारं च निराकारमात्मानं मन्यसे कथम् ॥ ५२ ॥
जानामि ते परं रूपं प्रत्यक्षं गगनोपमम् ॥
यथापरं हि रूपं यन्मरीचिजलसन्निभम् ॥ ५३ ॥
न गुरुर्नोपदेशश्च न चोपाधिर्न मे क्रिया ॥
विदेहं गगनं विद्धि विशुद्धोऽहं स्वभावतः ॥ ५४ ॥
विशुद्धोऽस्य शरीरोऽसि न ते चित्तं परात्परम् ॥
अहं चात्मा परं तत्त्वमिति वक्तुं न लज्जसे ॥ ५५ ॥
कथं रोदिषि रे चित्त ह्यात्मैवात्मात्मना भव ॥
पिब वत्स कलातीतमद्वैतं परमामृतम् ॥ ५६ ॥
नैव बोधो न चाबोधो न बोधाबोध एव च ॥
यस्येदृशः सदा बोधः स बोधो नान्यथा भवेत् ॥५७॥
ज्ञानं न तर्को न समाधियोगो न देशकालौ न गुरू-
पदेशः ॥ स्वभावसंवित्तिरहं च तत्त्वमाकाशकल्पं
सहजं ध्रुवं च ॥ ५८ ॥
न जातोऽहं मृतो वापि न मे कर्म शुभाशुभम् ॥
विशुद्धं निर्गुणं ब्रह्म बन्धो मुक्तिः कथं मम ॥ ५९ ॥
यदि सर्वगतो देवः स्थिरः पूर्णो निरन्तरः ॥

अन्तरं हि न पश्यामि सवाह्याभ्यन्तरः कथम् ॥६०॥
स्फुरत्येव जगत्कृत्स्नमखण्डितनिरन्तरम् ॥
अहो माया महामोहो द्वैताद्वैतविकल्पना ॥ ६१ ॥
साकारं च निराकारं नेति नेतीति सर्वदा ॥
भेदाभेदविनिर्मुक्तो वर्तते केवलः शिवः ॥ ६२ ॥
न ते च माता च पिता च बंधुर्न ते च पत्नी न
सुतश्च मित्रम् ॥ न पक्षपातो न विपक्षपातः कथं हि
संतप्तिरियं हि चित्ते ॥ ६३ ॥
दिवा नक्तं न ते चित्त उदयास्तमयौ न हि ॥
विदेहस्य शरीरत्वं कल्पयन्ति कथं बुधाः ॥ ६४ ॥
नाविभक्तं विभक्तं च न हि दुःखसुखादि च ॥
न हि सर्वमसर्वं च विद्धि चात्मानमव्ययम् ॥ ६५ ॥
नाहं कर्ता न भोक्ता च न मे कर्म पुराधुना ॥
न मे देहो विदेहो वा निर्ममेति ममेति किम् ॥ ६६ ॥
न मे रागादिको दोषो दुःखं देहादिकं न मे ॥
आत्मानं विद्धि मामेकं विशालं गगनोपमम् ॥ ६७ ॥
सखे मनः किं बहुजाल्पितेन सखे मनः सर्वमिदं वित-
र्क्यम् ॥ यत्सारभूतं कथितं मया ते त्वमेव तत्त्वं
गगनोपमोऽसि ॥ ६८ ॥
येन केनापि भावेन यत्र कुत्र मृता अपि ॥
योगिनस्तत्र लीयन्ते घटाकाशमिवाम्बरे ॥ ६९ ॥
तीर्थे चान्त्यजगेहे वा नष्टस्मृतिरपि त्यजन् ॥
समकाले तनुं मुक्तः कैवल्यव्यापको भवेत् ॥ ७० ॥
धर्मार्थकाममोक्षांश्च द्विपदादिचराचरम् ॥
मन्यन्ते योगिनः सर्वं मरीचिजलसन्निभम् ॥ ७१ ॥
अतीतानागतं कर्म वर्तमानं तथैव च ॥

न करोमि न भुञ्जामि इति मे निश्चला मतिः ॥ ७२॥
शून्यागारे समरसपूतस्तिष्ठन्नेकः सुखमवधूतः ॥
चरति हि नग्नस्त्यक्त्वा गर्वं विन्दति केवलमात्मनि
सर्वम् ॥ ७३ ॥
त्रितयतुरीयं न हि न हि यत्र विन्दति केवलमात्मनि
तत्र ॥ धर्माधर्मौ न हि न हि यत्र बद्धो मुक्तः कथमि
तत्र ॥ ७४ ॥
विन्दति विन्दति न हि न हि मन्त्रं छन्दोलक्षणं न हि
न हि तन्त्रम् ॥ समरसमग्नो भावितपूतः प्रलपितमे-
तत्परमवधूतः ॥ ७५ ॥
सर्वशून्यमशून्यं च सत्यासत्यं न विद्यते ॥
स्वभावभावतः प्रोक्तं शास्त्रसंवित्तिपूर्वकम् ॥ ७६ ॥

इति श्रीदत्तात्रेयविरचितायां अवधूतगीतायां आत्मसंवित्युपदेशो नाम प्रथमोऽध्यायः ॥ १ ॥

---

अवधूत उवाच ॥ बालस्य वा विषयभोगरतस्य वा
मूर्खस्य सेवकजनस्य गृहास्थितस्य ॥ एतद्गुरोः
किमपि नैव न चिन्तनीयं रत्नं कथं त्यजति
कोऽप्यशुचौ प्रविष्टम् ॥ १ ॥
नैवात्र काव्यगुण एव तु चिन्तनीयो ग्राह्यः परं गुण-
वता खलु सार एव ॥ सिन्दूरचित्ररहिता भुवि रूपशू-
न्या पारं न किं नयति नौरिह गन्तुकामान् ॥२॥
प्रयत्नेन विना येन निश्चलेन चलाचलम् ॥
ग्रस्तं स्वभावतः शान्तं चैतन्यं गगनोपमम् ॥ ३ ॥
अयत्नाच्चालयेद्यस्तु एकमेव चराचरम् ॥
सर्वगं तत्कथं भिन्नमद्वैतं वर्तते मम ॥ ४ ॥

अहमेव परं यस्मात्सारासारतरं शिवम् ॥
गमागमविनिर्मुक्तं निर्विकल्पं निराकुलम् ॥ २ ॥
सर्वावयवनिर्मुक्तं तदहं त्रिदशार्चितम् ॥
संपूर्णत्वान्न गृह्णामि विभागं त्रिदशादिकम् ॥ ६ ॥
प्रमादेन न संदेहः किं करिष्यामि वृत्तिवान् ॥
उत्पद्यन्ते विलीयन्ते बुद्बुदाश्च यथा जले ॥ ७ ॥
महदादीनि भूतानि समाप्यैवं सदैव हि ॥
मृदुद्रव्येषु तीक्ष्णेषु गुडेषु कटुकेषु च ॥ ८ ॥
कटुत्वं चैव शैत्यत्वं मृदुत्वं च यथा जले ॥
प्रकृतिः पुरुषस्तद्वदभिन्नं प्रतिभाति मे ॥ ९ ॥
सर्वाख्यारहितं यद्यत्सूक्ष्मात्सूक्ष्मतरं परम् ॥
मनोबुद्धींद्रियातीतमकलंकं जगत्पतिम् ॥ १० ॥
ईदृशं सहजं यत्र अहं तत्र कथं भवे ॥
त्वमेव हि कथं तत्र कथं तत्र चराचरम् ॥ ११ ॥
गगनोपमं तु यत्प्रोक्तं तदेव गगनोपमम् ॥
चैतन्यं दोषहीनं च सर्वज्ञं पूर्णमेव च ॥ १२ ॥
पृथिव्यां चरितं नैव मारुतेन च वाहितम् ॥
वारिणा पिहितं नैव तेजोमध्ये व्यवस्थितम् ॥ १३ ॥
आकाशं तेन संव्याप्तं न तद्व्याप्तं च केनचित् ॥
सबाह्याभ्यन्तरं तिष्ठत्यवच्छिन्नं निरन्तरम् ॥ १४ ॥
सूक्ष्मत्वात्तदृश्यत्वान्निर्गुणत्वाच्च योगिभिः॥
आलम्बनादि यत्प्रोक्तं क्रमादालम्बनं भवेत् ॥ १५ ॥
सततऽभ्यासयुक्तस्तु निरालम्बो यदा भवेत् ॥
तल्लयाल्लीयते नान्तर्गुणदोषविवर्जितः ॥ १६ ॥
विषविश्वस्य रौद्रस्य मोहमूर्च्छाप्रदस्य च ॥
एकमेव विनाशाय ह्यमोघं सहजामृतम् ॥ १७ ॥

भावगम्यं निराकारं साकारं दृष्टिगोचरम् ॥
भावाभावविनिर्मुक्तमन्तरालं तदुच्यते ॥ १८ ॥
बाह्यभावं भवेद्विश्वमन्तः प्रकृतिरुच्यते ॥
अन्तरादन्तरं ज्ञेयं नालिकेरफलाम्बुवत् ॥ १९॥
भ्रांतिज्ञानं स्थितं बाह्ये सम्यग्ज्ञानं च मध्यगम् ॥
मध्यान्मध्यतरं ज्ञेयं नालिकेरफलाम्बुवत् ॥ २० ॥
पौर्णमास्यां यथा चन्द्र एक एवातिनिर्मलः ॥
तेन तत्सदृशं पश्येद्द्विधादृष्टिर्विपर्ययः ॥ २१ ॥
अनेनैव प्रकारेण बुद्धिभेदो न सर्वगः ॥
दाता च धीरतामेति गीयते नामकोटिभिः ॥ २२ ॥
गुरुप्रज्ञाप्रसादेन मूर्खो वा यदि पण्डितः ॥
यस्तु संबुध्यते तत्त्वं विरक्तो भवसागरात् ॥ २३ ॥
रागद्वेषविनिर्मुक्तः सर्वभूतहिते रतः ॥
दृढबोधश्च धीरश्च स गच्छेत्परमं पदम् ॥ २४ ॥
घटे भिन्ने घटाकाश आकाशे लीयते यथा ॥
देहाभावे तथा योगी स्वरूपे परमात्मनि ॥ २५ ॥
उक्तेयं कर्मयुक्तानां मतिर्यान्तेऽपि सा गतिः ॥
न चोक्ता योगयुक्तानां मतिर्यान्तेऽपि सा गतिः ॥२६
या गतिः कर्मयुक्तानां सा च वागिंद्रियाद्वदेत् ॥
योगिनां या गतिः क्वापि ह्यकथ्या भवतोर्जिता ॥२७
एवं ज्ञात्वा त्वमुं मार्गं योगिनां नैव कल्पितम् ॥
विकल्पवर्जनं तेषां स्वयं सिद्धिः प्रवर्तते ॥ २८ ॥
तीर्थे वान्त्यजगेहे वा यत्र कुत्र मृतोऽपि वा ॥
न योगी पश्यते गर्भं परे ब्रह्मणि लीयते ॥ २९ ॥
सहजमजमचिन्त्यं यस्तु पश्येत्स्वरूपं घटति यदि यथे
लिप्यते नैव दोषैः ॥ सकृदपि तदभावात्कर्म किंचि

कुर्यात्तदपि न च विबद्धः संयमी वा तपस्वी ॥ ३० ॥
निरामयं निष्प्रतिमं निराकृतिं निराश्रयं निर्वपुषं नि-
राशिषम् ॥ निर्द्वन्द्वनिर्मोहमलुप्तशक्तिकं तमीशमात्मानमु-
पैति शाश्वतम् ॥ ३१ ॥
वेदो न दीक्षा न च मुण्डनक्रिया गुरुर्न शिष्यो न च
यंत्रसंपदः ॥ मुद्रादिकं चापि न यत्र भासते तमीशमा-
त्मानमुपैति शाश्वतम् ॥ ३२ ॥
न शांभवं शाक्तिकमानवं न वा पिण्डं च रूपं च पदा-
दिकं न वा ॥ आरम्भनिष्पत्तिघटादिकं च नो तमी-
शमात्मानमुपैति शाश्वतम् ॥ ३३ ॥
यस्य स्वरूपात्सचराचरं जगदुत्पद्यते तिष्ठति लीयतेऽपि
वा ॥ पयोविकाशादिव फेनबुद्बुदास्तमीशमात्मानमुपैति
शाश्वतम् ॥ ३४ ॥
नासानिरोधो न च दृष्टिरासनं बोधोऽप्यबोधोऽपि न
यत्र भासते ॥ नाडीप्रचारोऽपि न यत्र किंचित्तमीशमा-
त्मानमुपैति शाश्वतम् ॥ ३५ ॥
नानात्वमेकत्वमुभत्वमन्यता अणुत्वदीर्घत्वमहत्त्वशून्य-
तः ॥ मानत्वमेयत्वसमत्ववर्जितं तमीशमात्मानमुपैति
शाश्वतम् ॥ ३६ ॥
सुसंयमी वा यदि वा न संयमी सुसंग्रही वा यदि वा
न संग्रही ॥ निष्कर्मको वा यदि वा सकर्मकस्तमी-
शमात्मानमुपैति शाश्वतम् ॥ ३७ ॥
मनो न बुद्धिर्न शरीरमिन्द्रियं तन्मात्रभूतानि न भूतप-
ञ्चकम् ॥ अहंकृतिश्चापि वियत्स्वरूपकं तमीशमात्मानमु-
पैति शाश्वतम् ॥ ३८ ॥
विधौ निरोधे परमात्मतां गते न योगिनश्चेतसि भेदव-

र्जिते ॥ शौचं न वा शौचमलिंगभावना सर्वं विधेयं
यदि वा निषिध्यते ॥ ३९ ॥
मनो वचो यत्र न शक्तमीरितुं नूनं कथं तत्र गुरूपदे-
शता ॥ इमां कथामुक्तवतो गुरोस्तद्युक्तस्य तत्त्वं हि समं
प्रकाशते ॥ ४० ॥

इति अवधूतगीतायां द्वितीयोऽध्यायः ॥ २ ॥

---

अवधूत उवाच ॥ गुणविगुणविभागो वर्तते नैव किंचिद्र-
तिविरतिविहीनं निर्मलं निष्प्रपञ्चम् ॥ गुणविगुणविही-
नं व्यापकं विश्वरूपं कथमहमिह वन्दे व्योमरूपं शिवं
वै ॥ १ ॥
श्वेतादिवर्णरहितो नियतं शिवश्च कार्यं हि कारणमिदं
हि परं शिवश्च ॥ एवं विकल्परहितोऽहमलं शिवश्च
स्वात्मानमात्मानि सुमित्र कथं नमामि ॥ २ ॥
निर्मूलमूलरहितो हि सदोदितोऽहं निर्धूमधूमरहितो
हि सदोदितोऽहम् ॥ निर्दीपदीपरहितो हि सदोदितोऽहं
ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ३ ॥
निष्कामकाममिह नाम कथं वदामि निःसंगसंगमिह
नाम कथं वदामि ॥ निःसारसाररहितं च कथं वदामि
ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ४ ॥
अद्वैतरूपमखिलं हि कथं वदामि द्वैतस्वरूपमखिलं हि
कथं वदामि ॥ नित्यं त्वनित्यमखिलं हि कथं वदामि
ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ५ ॥
स्थूलं हि नो न हि कृशं न गतागतं हि आद्यन्तमध्यर-
हितं न परापरं हि ॥ सत्यं वदामि खलु वै परमार्थ-
तत्त्वं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ६ ॥

संविद्धि सर्वकरणानि नभोनिभानि संविद्धि सर्वविष-
याश्च नभोनिभाश्च ॥ संविद्धि चैकममलं न हि बन्धमुक्तं
ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ७ ॥
दुर्बोधबोधगहनो न भवामि तात दुर्लक्ष्यलक्ष्यगहनो न
भवामि तात ॥ आसन्नरूपगहनो न भवामि तात
ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ८ ॥
निष्कर्मकर्मदहनो ज्वलनो भवामि निर्दुःखदुःखदहनो
ज्वलनो भवामि ॥ निर्देहदेहदहनो ज्वलनो भवामि
ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ९ ॥
निष्पापपापदहनो हि हुताशनोऽहं निर्धर्मधर्मदहनो हि
हुताशनोऽहम् ॥ निर्बन्धबन्धदहनो हि हुताशनोऽहं
ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ १० ॥
निर्भावभावरहितो न भवामि वत्स निर्योगयोगरहितो
न भवामि वत्स ॥ निश्चित्तचित्तरहितो न भवामि वत्स
ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ११ ॥
निर्मोहमोहपदवीति न मे विकल्पो निःशोकशोकपदवी-
ति न मे विकल्पः ॥ निर्लोभलोभपदवीति न मे विक-
ल्पो ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ १२ ॥
संसारसंततिलता न च मे कदाचित्संतोषसंततिसुखे न
च मे कदाचित् ॥ अज्ञानबन्धनमिदं न च मे कदाचि-
ज्ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ १३ ॥
संसारसंततिरजो न च मे विकारः संतापसंतततिमो न
च मे विकारः ॥ सत्त्वं स्वधर्मजनकं न च मे विकारो
ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ १४ ॥
संतापदुःखजनको न विधिः कदाचित् संतापयोगज-
नितं न मनः कदाचित् ॥ यस्मादहंकृतिरियं न च मे

कदाचिज्ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ १५ ॥
निष्कम्पकम्पनिधनं न विकल्पकल्पं स्वप्नप्रबोधनिधनं न हिताहितं हि ॥ निःसारसारनिधनं न चराचरं हि ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ १६ ॥
नो वेद्यवेदकमिदं न च हेतुतर्क्यं वाचामगोचरमिदं न मनो न बुद्धिः ॥ एवं कथं हि भवतः कथयामि तत्त्वं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ १७ ॥
निर्भिन्नभिन्नरहितं परमार्थतत्त्वमन्तर्बहिर्न हि कथं परमार्थतत्त्वम् ॥ प्राक्संभवं न च रतं न हि वस्तु किंचिज्ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ १८ ॥
रागादिदोषरहितं त्वहमेव तत्त्वं दैवादिदोषरहितं त्वहमेव तत्त्वम् ॥ संसारशोकरहितं त्वहमेव तत्त्वं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ १९ ॥
स्थानत्रयं यदि च नेति कथं तुरीयं कालत्रयं यदि च नेति कथं दिशश्च ॥ शान्तं पदं हि परमं परमार्थतत्त्वं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ २० ॥
दीर्घो लघुः पुनरितीह न मे विभागो विस्तारसंकटमितीह न मे विभागः ॥ कोणं हि वर्तुलमितीह न मे विभागो ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ २१ ॥
मातापितादि तनयादि न मे कदाचिज्जातं मृतं न च मनो न च मे कदाचित् ॥ निर्व्याकुलं स्थिरमिदं परमार्थतत्त्वं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ २२ ॥
शुद्धं विशुद्धमविचारमनन्तरूपं निर्लेपलेपमविचारमनन्तरूपम् ॥ निःखण्डखण्डमविचारमनन्तरूपं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ २३ ॥
ब्रह्मादयः सुरगणाः कथमत्र सन्ति स्वर्गादयो वसतयः

कथमत्र संति ॥ यद्येकरूपममलं परमार्थतत्त्वं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ २४ ॥
निर्नेतिनेति विमलो हि कथं वदामि निःशेषशेषविमलो हि कथं वदामि ॥ निर्लिंगलिंगविमलो हि कथं वदामि ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ २५ ॥
निष्कर्मकर्मपरमं सततं करोमि निःसंगसंगरहितं परमं विनोदम् ॥ निर्देहदेहरहितं सततं विनोदं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ २६ ॥
माया प्रपञ्चरचना न च मे विकारो कौटिल्यदम्भरचना न च मे विकारः ॥ सत्यानृतेति रचना न च मे विकारो ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ २७ ॥
संध्यादिकालरहितं न च मे वियोगो ह्यन्तःप्रबोधरहितं बधिरो न मूकः ॥ एवं विकल्परहितं न च भावशुद्धं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ २८ ॥
निर्नाथनाथरहितं हि निराकुलं वै निश्चित्तचित्तविगतं हि निराकुलं वै ॥ संविद्धि सर्वविगतं हि निराकुलं वै ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ २९ ॥
कान्तारमंदिरमिदं हि कथं वदामि संसिद्धसंशयमिदं हि कथं वदामि ॥ एवं निरन्तरसमं हि निराकुलं वै ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ३० ॥
निर्जीवजीवरहितं सततं विभाति निर्बीजबीजरहितं सततं विभाति ॥ निर्वाणबन्धरहितं सततं विभाति ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ३१ ॥
संभूतिवर्जितमिदं सततं विभाति संसारवर्जितमिदं सततं विभाति ॥ संहारवर्जितमिदं सततं विभाति ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ३२ ॥

उल्लेखमात्रमपि ते न च नामरूपं निर्भिन्नभिन्नमपि ते
न हि वस्तु किंचित् ॥ निर्लज्ज मानस करोषि कथं
विषादं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ३३ ॥
किं नाम रोदिषि सखे न जरा न मृत्युः किं नाम
रोदिषि सखे न च जन्मदुःखम् ॥ किं नाम
रोदिषि सखे न च ते विकारो ज्ञानामृतं समरसं
गगनोपमोऽहम् ॥ ३४ ॥
किं नाम रोदिषि सखे न च ते स्वरूपं किं नाम रो-
दिषि सखे न च ते विरूपम् ॥ किं नाम रोदिषि सखे
न च ते वयांसि ज्ञानामृतं समरसं गगनोपमोऽहम् ३५
किं नाम रोदिषि सखे न च ते वयांसि किं नाम
रोदिषि सखे न च ते मनांसि ॥ किं नाम रोदिषि
सखे न तवेन्द्रियाणि ज्ञानामृतं समरसं गगनो-
पमोऽहम् ॥ ३६ ॥
किं नाम रोदिषि सखे न च तेऽस्ति कामः किं नाम
रोदिषि सखे न च ते प्रलोभः ॥ किं नाम रोदिषि
सखे न च ते विमोहो ज्ञानामृतं समरसं गगनोपमोऽ-
हम् ॥ ३७ ॥
ऐश्वर्यमिच्छसि कथं न च ते धनानि ऐश्वर्यमिच्छसि
कथं न च ते हि पत्नी ॥ ऐश्वर्यमिच्छसि कथं न च
ते ममेति ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ३८ ॥
लिंगप्रपंचजनुषी न च ते न मे च निर्लज्जमानसमिदं
च विभाति भिन्नम् ॥ निर्भेदभेदरहितं न च ते न मे
च ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ३९ ॥
नो वाणुमात्रमपि ते हि विरागरूपं नो वाणुमात्रमपि ते
हि सरागरूपम् ॥ नो वाणुमात्रमपि ते हि सकाम-

रूपं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥४०॥
ध्याता न ते हि हृदये न च ते समाधिर्ध्यानं न ते हि हृदये न बहिःप्रदेशः॥ ध्येयं न चेति हृदये न हि वस्तु कालो ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ४१ ॥
यत्सारभूतमखिलं कथितं मया ते न त्वं न मे न महतो न गुरुर्न शिष्यः ॥ स्वच्छन्दरूपसहजं परमार्थ-तत्त्वं ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ४२ ॥
कथमिह परमार्थं तत्त्वमानन्दरूपं कथमिह परमार्थं नैव-मानन्दरूपम् ॥ कथमिह परमार्थं ज्ञानविज्ञानरूपं यदि परमहमेकं वर्तते व्योमरूपम् ॥ ४३ ॥
दहनपवनहीनं विद्धि विज्ञानमेकमवनिजलविहीनं विद्धि विज्ञानरूपम् ॥ समगमनविहीनं विद्धि विज्ञान-मेकं गगनमिव विशालं विद्धि विज्ञानमेकम् ॥ ४४ ॥
न शून्यरूपं न विशून्यरूपं न शुद्धरूपं न विशुद्ध-रूपम् ॥ रूपं विरूपं न भवामि किंचित्स्वरूपरूपं परमार्थ-तत्त्वम् ॥ ४५ ॥
मुंच मुंच हि संसारं त्यागं मुंच हि सर्वथा ॥
त्यागात्त्यागविषं शुद्धममृतं सहजं ध्रुवम् ॥ ४६ ॥

इति अवधूतगीतायां तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीदत्त उवाच ॥ नावाहनं नैव विसर्जनं वा पुष्पाणि पत्राणि कथं भवन्ति ॥ ध्यानानि मन्त्राणि कथं भव-न्ति समासमं चैव शिवार्चनं च ॥ १ ॥
न केवलं बन्धविबन्धमुक्तो न केवलं शुद्धविशुद्धमुक्तः ॥ न केवलं योगवियोगमुक्तः स वै विमुक्तो गगनो-पमोऽहम् ॥ २ ॥

संजायते सर्वमिदं हि तथ्यं संजायते सर्वमिदं वितथ्यम् ॥ एवं विकल्पो मम नैव जातः स्वरूपनिर्वाणमनामयोऽहम् ॥ ३ ॥

न साञ्जनं चैव निरञ्जनं वा न चान्तरं वापि निरन्तरं वा ॥ अन्तर्विभिन्नं न हि मे विभाति स्वरूपनिर्वाणमनामयोऽहम् ॥ ४ ॥

अबोधबोधो मम नैव जातो बोधस्वरूपं मम नैव जातम् ॥ निर्बोधबोधं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ ५ ॥

न धर्मयुक्तो न च पापयुक्तो न बन्धयुक्तो न च मोक्षयुक्तः ॥ युक्तं त्वयुक्तं न च मे विभाति स्वरूपनिर्वाणमनामयोऽहम् ॥ ६ ॥

परापरं वा न च मे कदाचिन्मध्यस्थभावो हि न चारिमित्रम् ॥ हिताहितं चापि कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ ७ ॥

नोपासको नैवमुपास्यरूपं न चोपदेशो न च मे क्रिया च ॥ संवित्स्वरूपं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ ८ ॥

नो व्यापकं व्याप्यमिहास्ति किंचिन्न चालयं वापि निरालयं वा ॥ अशून्यशून्यं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ ९ ॥

न ग्राहको ग्राह्यकमेव किंचिन्न कारणं वा मम नैव कार्यम् ॥ अचिन्त्यचिन्त्यं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ १० ॥

न भेदकं वापि न चैव भेद्यं न वेदकं वा मम नैव वेद्यम् ॥ गतागतं तात कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ १

न चास्ति देहो न च मे विदेहो बुद्धिर्मनो मे न हि चेंद्रियाणि ॥ रागो विरागश्च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ १२ ॥

उल्लेखमात्रं न हि भिन्नमुच्चैरुल्लेखमात्रं न तिरोहितं वै ॥ समासमं मित्र कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ १३ ॥

जितेन्द्रियोऽहं त्वजितेन्द्रियो वा न संयमो मे नियमो न जातः ॥ जयाजयौ मित्र कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ १४ ॥

अमूर्तमूर्तिर्न च मे कदाचित् आद्यन्तमध्यं न च मे कदाचित् ॥ बलाबलं मित्र कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ १५ ॥

मृतामृतं वापि विषाविषं च संजायते तात न मे कदाचित् ॥ अशुद्धशुद्धं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ १६ ॥

स्वप्नः प्रबोधो न च योगमुद्रा नक्तं दिवा वापि न मे कदाचित् ॥ अतुर्यतुर्यं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ १७ ॥

संविद्धि मां सर्वविसर्वमुक्तं माया विमाया न च मे कदाचित् ॥ संध्यादिकं कर्म कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ १८ ॥

संविद्धि मां सर्वसमाधियुक्तं संविद्धि मां लक्ष्यविलक्ष्यमुक्तम् ॥ योगं वियोगं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ १९ ॥

मूर्खोऽपि नाहं न च पण्डितोऽहं मौनं विमौनं न च मे कदाचित् ॥ तर्कं वितर्कं च कथं वदामि स्वरूप-

निर्वाणमनामयोऽहम् ॥ २० ॥
पिता च माता च कुलं न जातिर्जन्मादिमृत्युर्न च मे
कदाचित् ॥ स्नेहं विमोहं च कथं वदामि स्वरूप-
निर्वाणमनामयोऽहम् ॥ २१ ॥
अस्तं गतो नैव सदोदितोऽहं तेजो वितेजो न च मे
कदाचित् ॥ संध्यादिकं कर्म कथं वदामि स्वरूप-
निर्वाणमनामयोऽहम् ॥ २२ ॥
असंशयं विद्धि निराकुलं मामसंशयं विद्धि निरन्तरं
माम् ॥ असंशयं विद्धि निरंजनं मां स्वरूप-
निर्वाणमनामयोऽहम् ॥ २३ ॥
ध्यानानि सर्वाणि परित्यजन्ति शुभाशुभं कर्म परित्य-
जन्ति ॥ त्यागामृतं तात पिबन्ति धीराः स्वरूप-
निर्वाणमनामयोऽहम् ॥ २४ ॥
विन्दति विन्दति न हि न हि यत्र छन्दोलक्षणं न हि
न हि तत्र ॥ समरसमग्नो भावितपूतः प्रलपति तत्त्वं
परमवधूतः ॥ २५ ॥

इति अवधूतगीतायां स्वरूपनिर्णयो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीदत्त उवाच ॥ ॐ इति गदितं गगनसमं तन्न परापरसार-
विचार इति ॥ अविलासविलासनिराकरणं कथमक्षर-
विन्दुसमुच्चरणम् ॥ १ ॥
इति तत्त्वमसिप्रभृतिश्रुतिभिः प्रतिपादितमात्मनि तत्त्व-
मसि ॥ त्वमुपाधिविवर्जितसर्वसमं किमु रोदिषि मा-
नसि सर्वसमम् ॥ २ ॥
अधऊर्ध्वविवर्जितसर्वसमं बहिरन्तरवर्जितसर्वसमम् ॥
यदि चैकविवर्जितसर्वसमं किमु रोदिषि मानसि सर्व-

समम् ॥ ३ ॥
न हि कल्पितकल्पविचार इति न हि कारणकार्यविचार इति ॥ पदसंधिविवर्जितसर्वसमं किमु रोदिषि मानसि सर्वसमम् ॥ ४ ॥
न हि बोधविबोधसमाधिरिति न हि देशविदेशसमाधिरिति ॥ न हि कालविकालसमाधिरिति किमु रोदिषि मानसि सर्वसमम् ॥ ५ ॥
न हि कुंभनभो न हि कुंभ इति न हि जीववपुर्न हि जीव इति ॥ न हि कारणकार्यविभाग इति किमु रोदिषि मानसि सर्वसमम् ॥ ६ ॥
इह सर्वनिरन्तरमोक्षपदं लघुदीर्घविचारविहीन इति ॥ न हि वर्तुलकोणविभाग इति किमु रोदिषि मानसि सर्वसमम् ॥ ७ ॥
इह शून्यविशून्यविहीन इति इह शुद्धविशुद्धविहीन इति ॥ इह सर्वविसर्वविहीन इति किमु रोदिषि मानसि सर्वसमम् ॥ ८ ॥
न हि भिन्नविभिन्नविचार इति बहिरन्तरसंधिविचार इति ॥ अरिमित्रविवर्जितसर्वसमं किमु रोदिषि मानसि सर्वसमम् ॥ ९ ॥
न हि शिष्यविशिष्यसरूप इति न चराचरभेदविचार इति ॥ इह सर्वनिरन्तरमोक्षपदं किमु रोदिषि मानसि सर्वसमम् ॥ १० ॥
ननु रूपविरूपविहीन इति ननु भिन्नविभिन्नविहीन इति ॥ ननु सर्वविसर्वविहीन इति किमु रोदिषि मानसि सर्वसमम् ॥ ११ ॥
न गुणागुणपाशनिबन्ध इति मृतजीवनकर्म करोमि

कथम् ॥ इति शुद्धनिरंजनसर्वसमं किमु रोदिषि मानसि सर्वसमम् ॥ १२ ॥

इह भावविभावविहीन इति इह कामविकामविहीन इति ॥ इह बोधतमं खलु मोक्षसमं किमु रोदिषि मानसि सर्वसमम् ॥ १३ ॥

इह तत्त्वनिरन्तरतत्त्वमिति न हि संधिविसंधिविहीन इति ॥ यदि सर्वविवर्जितसर्वसमं किमु रोदिषि मानसि सर्वसमम् ॥ १४ ॥

अनिकेतकुटीपरिवारसमं इह संगविसंगविहीनपरम् ॥ इह बोधविबोधविहीनपरं किमु रोदिषि मानसि सर्वसमम् ॥ १५ ॥

अविकारविकारमसत्यमिति अविलक्षविलक्षमसत्यमिति ॥ यदि केवलमात्मनि सत्यमिति किमु रोदिषि मानसि सर्वसमम् ॥१६॥

इह सर्वतमं खलु जीव इति इह सर्वनिरन्तरजीव इति॥ इह केवलनिश्चलजीव इति किमु रोदिषि मानसि सर्वसमम् ॥ १७ ॥

अविवेकविवेकमबोध इति अविकल्पविकल्पमबोध इति ॥ यदि चैकनिरन्तरबोध इति किमु रोदिषि मानसि सर्वसमम् ॥ १८ ॥

न हि मोक्षपदं न हि बन्धपदं न हि पुण्यपदं न हि पापपदम् ॥ न हि पूर्णपदं न हि रिक्तपदं किमु रोदिषि मानसि सर्वसमम् ॥ १९ ॥

यदि वर्णविवर्णविहीनसमं यदि कारणकार्यविहीनसमम् ॥ यदि भेदविभेदविहीनसमं किमु रोदिषि मानसि सर्वसमम् ॥२० ॥

इह सर्वनिरन्तरसर्वचिते इह केवलनिश्चलसर्वचिते ॥
द्विपदादिविवर्जितसर्वचिते किमु रोदिषि मानसि
सर्वसमम् ॥ २१ ॥
अतिसर्वनिरन्तरसर्वगतं रतिनिर्मलनिश्चलसर्वगतम् ॥
दिनरात्रिविवर्जितसर्वगतं किमु रोदिषि मानसि
सर्वसमम् ॥ २२ ॥
न हि बन्धविबन्धसमागमनं न हि योगवियोगसमा-
गमनम् ॥ न हि तर्कवितर्कसमागमनं किमु रोदिषि
मानसि सर्वसमम् ॥ २३ ॥
इह कालविकालनिराकरणमणुमात्रकृशानुनिराकरणम्॥
न हि केवलसत्यनिराकरणं किमु रोदिषि मानसि
सर्वसमम् ॥ २४ ॥
इह देहविदेहविहीन इति ननु स्वप्नसुषुप्तिविहीनपरम् ॥
अभिधानविधानविहीनपरं किमु रोदिषि मानसि
सर्वसमम् ॥ २५ ॥
गगनोपमशुद्धविशालसमं अविसर्वविवर्जितसर्वसमम् ॥
गतसारविसारविकारसमं किमु रोदिषि मानसि
सर्वसमम् ॥ २६ ॥
इह धर्मविधर्मविरागतरं इह वस्तुविवस्तुविरागतरम् ॥
इह कामविकामविरागतरं किमु रोदिषि मानसि
सर्वसमम् ॥ २७ ॥
सुखदुःखविवर्जितसर्वसमामिह शोकविशोकविहीनपरम्॥
गुरुशिष्यविवर्जिततत्त्वपरं किमु रोदिषि मानसि
सर्वसमम् ॥ २८ ॥
न किलांकुरसारविसार इति न चलाचलसाम्यवि-
साम्यमिति ॥ अविचारविचारविहीनमिति किमु

रोदिषि मानसि सर्वसमम् ॥ २९ ॥
इह सारसमुच्चयसारमिति कथितं निजभावविभेद
इति ॥ विषये करणत्वमसत्यमिति किमु रोदिषि
मानसि सर्वसमम् ॥ ३० ॥
वहुधा श्रुतयः प्रवदन्ति यतो वियदादिरिदं मृगतोय-
समम् ॥ यदि चैकनिरन्तरसर्वसमं किमु रोदिषि
मानसि सर्वसमम् ॥ ३१ ॥
विन्दति विन्दति न हि न हि यत्र छन्दोलक्षणं न हि
न हि तत्र ॥ समरसमग्नो भावितपूतः प्रलपति तत्त्वं
परमवधूतः ॥ ३२ ॥

इति अवधूतगीतायां शमदृष्टिकथनं नाम पंचमोऽध्यायः ॥ ५ ॥

---

श्रीदत्त उवाच ॥ बहुधा श्रुतयः प्रवदन्ति वयं वियदादिरिदं
मृगतोयसमम् ॥ यदि चैकनिरन्तरसर्वशिवमुपमेयमथो
ह्युपमा च कथम् ॥ १ ॥
अविभक्तिविभक्तिविहीनपरं ननु कार्यविकार्यविहीनप-
रम् ॥ यदि चैकनिरन्तरसर्वशिवं यजनं च कथं तपनं
च कथम् ॥ २ ॥
मन एव निरन्तरसर्वगतं ह्यविशालविशालविहीनपरम् ॥
मन एव निरन्तरसर्वशिवं मनसापि कथं वचसा च
कथम् ॥ ३ ॥
दिनरात्रिविभेदनिराकरणमुदितानुदितस्य निराकरणम् ॥
यदि चैकनिरन्तरसर्वशिवं रविचन्द्रमसौ ज्वलनश्च
कथम् ॥ ४ ॥
गतकामविकामविभेद इति गतचेष्टविचेष्टविभेद
इति ॥ यदि चैकनिरन्तरसर्वशिवं बहिरन्तरभिन्नमतिः

कथम् ॥ ५ ॥

यदि सारविसारविहीन इदि यदि शून्यविशून्यविहीन इति ॥ यदि चैकनिरन्तरसर्वशिवं प्रथमं च कथं चरमं च कथम् ॥ ६ ॥

यदि भेदविभेदनिराकरणं यदि वेदकवेद्यनिराकरणम् ॥ यदि चैकनिरन्तरसर्वशिवं तृतीयं च कथं तुरीयं च कथम् ॥ ७ ॥

गदितागदितं न हि सत्यमिति विदिताविदितं न हि सत्यमिति ॥ यदि चैकनिरन्तरसर्वशिवं विषयेन्द्रियबुद्धिमनांसि कथम् ॥ ८ ॥

गगनं पवनो न हि सत्यमिति धरणी दहनो न हि सत्यमिति ॥ यदि चैकनिरन्तरसर्वशिवं जलदश्च कथं सलिलं च कथम् ॥ ९ ॥

यदि कल्पितलोकनिराकरणं यदि कल्पितदेवनिराकरणम् ॥ यदि चैकनिरन्तरसर्वशिवं गुणदोषविचारमतिश्च कथम् ॥ १० ॥

मरणामरणं हि निराकरणं करणाकरणं हि निराकरणम् ॥ यदि चैकनिरन्तरसर्वशिवं गमनागमनं हि कथं वदति ॥ ११ ॥

प्रकृतिः पुरुषो न हि भेद इति न हि कारणकार्यविभेद इति ॥ यदि चैकनिरन्तरसर्वशिवं पुरुषापुरुषं च कथं वदति ॥ १२ ॥

तृतीयं न हि दुःखसमागमनं न गुणाद्द्वितीयस्य समागमनम् ॥ यदि चैकनिरन्तरसर्वशिवं स्थविरश्च युवा च शिशुश्च कथम् ॥ १३ ॥

ननु आश्रमवर्णविहीनपरं ननु कारणकर्तृविहीनपरम् ॥

यदि चैकनिरन्तरसर्वशिवमविनष्टाविनष्टमतिश्च क-
थम् ॥ १४ ॥

ग्रसिताग्रसितं च वितथ्यमिति जनिताजनितं च वित-
थ्यमिति ॥ यदि चैकनिरन्तरसर्वशिवमविनाशि वि-
नाशि कथं हि भवेत् ॥ १५ ॥

पुरुषापुरुषस्य विनष्टमिति वनितावनितस्य विनष्टमि-
ति ॥ यदि चैकनिरन्तरसर्वशिवमविनोदविनोदमतिश्च
कथम् ॥ १६ ॥

यदि मोहविषादविहीनपरो यदि संशयशोकविहीनपरः
॥ यदि चैकनिरन्तरसर्वशिवमहमेति ममेति कथं च
पुनः ॥ १७ ॥

ननु धर्मविधर्मविनाश इति ननु बन्धविबन्धविनाश
इति ॥ यदि चैकनिरन्तरसर्वशिवमिह दुःखविदुःखम-
तिश्च कथम् ॥ १८ ॥

न हि याज्ञिकयज्ञविभाग इति न हुताशनवस्तुविभाग
इति ॥ यदि चैकनिरन्तरसर्वशिवं वद कर्मफलानि
भवन्ति कथम् ॥ १९ ॥

ननु शोकविशोकविमुक्त इति ननु दर्पविदर्पविमुक्त
इति ॥ यदि चैकनिरन्तरसर्वशिवं ननु रागविरागम-
तिश्च कथम् ॥ २० ॥

न हि मोहविमोहविकार इति न हि लोभविलोभविकार
इति ॥ यदि चैकनिरन्तरसर्वशिवं ह्यविवेकविवेक-
मतिश्च कथम् ॥ २१ ॥

त्वमहं न हि हंत कदाचिदपि कुलजातिविचारमसत्य-
मिति ॥ अहमेव शिवः परमार्थ इति अभिवादनम-
करोमि कथम् ॥ २२ ॥

गुरुशिष्यविचारविशीर्ण इति उपदेशविचारविशीर्ण इति ॥ अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम् ॥ २३ ॥

न हि कल्पितदेहविभाग इति न हि कल्पितलोकविभाग इति ॥ अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम् ॥ २४ ॥

सरजो विरजो न कदाचिदपि ननु निर्मलनिश्चलशुद्ध इति ॥ अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम् ॥ २५ ॥

न हि देहविदेहविकल्प इति अनृतं चरितं न हि सत्यमिति ॥ अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम् ॥ २६ ॥

विन्दति विन्दति न हि न हि यत्र छन्दोलक्षणं न हि न हि तत्र ॥ समरसमग्नो भावितपूतः प्रलपति तत्त्वं परमवधूतः ॥ २७ ॥

इति अवधूतगीतायां मोक्षनिर्णयो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीदत्त उवाच ॥ रथ्याकर्पटविरचितकन्थः पुण्यापुण्यविवर्जितपन्थः ॥ शून्यागारे तिष्ठति नग्नो शुद्धनिरंजनसमरसमग्नः ॥ १ ॥

लक्षालक्षविवर्जितलक्ष्यो युक्तायुक्तविवर्जितदक्षः ॥
केवलतत्त्वनिरंजनपूतो वादविवादः कथमवधूतः ॥२॥

आशापाशविबन्धनमुक्तः शौचाचारविवर्जितयुक्तः ॥
एवं सर्वविवर्जितसंतस्तत्त्वं शुद्धनिरञ्जनवन्तः ॥३॥

कथमिह देहविदेहविचारः कथमिह रागविरागविचारः ॥ निर्मलनिश्चलगगनाकारं स्वयमिह तत्त्वं सह-

जाकारम् ॥ ४ ॥
कथमिह तत्त्वं विन्दाति यत्र रूपमरूपं कथमिह तत्र॥
गगनाकारः परमो यत्र विषयीकरणं कथमिह तत्र॥५॥
गगनाकारनिरन्तरहंसस्तत्त्वविशुद्धनिरंजनहंसः ॥
एवं कथमिह भिन्नविभिन्नं वन्धाविबन्धाविकारविभि-
न्नम् ॥ ६ ॥
केवलतत्त्वानिरन्तरसर्वं योगावियोगौ कथमिह गर्वम् ॥
एवं परमानिरन्तरसर्वं एवं कथमिह सारविसारम् ॥७॥
केवलतत्त्वनिरञ्जनसर्वं गगनाकारानिरन्तरशुद्धम् ॥
एवं कथमिह संगविसंगं सत्यं कथमिह रङ्गविरङ्गम् ८
योगवियोगै रहितो योगी भोगविभोगै रहितो भोगी॥
एवं चराति हि मन्दं मन्दं मनसा कल्पितसहजा-
नन्दम् ॥ ९ ॥
बोधाविबोधैः सततं युक्तो द्वैताद्वैतः कथमिह मुक्तः ॥
सहजो विरजः कथमिह योगी शुद्धनिरञ्जनसमरस-
भोगी ॥ १० ॥
भग्नाभग्नविवर्जितभग्नो लग्नालग्नाविवार्जितलग्नः ॥ एवं
कथमिह सारविसारः समरसतत्त्वं गगनाकारः ॥११॥
सततं सर्वाविवर्जितयुक्तः सर्वं तत्त्वाविवार्जितयुक्तः ॥
एवं कथमिह जीवितमरणं ध्यानाध्यानैः कथमिह कार-
णम् ॥ १२ ॥
इन्द्रजालमिदं सर्वं यथा मरुमरीचिका ॥
अखण्डितमनाकारो वर्तते केवलः शिवः ॥ १३ ॥
धर्मादौ मोक्षपर्यन्तं निरीहाः सर्वथा वयम् ॥
कथं रागविरागैश्च कल्पयन्ति विपश्चितः ॥ १४ ॥
विन्दति विन्दाति न हि न हि यत्र छन्दोलक्षणं न हि

न हि तत्र ॥ समरसमग्नो भावितपूतः प्रलपति तत्त्वं परमवधूतः ॥ १५ ॥

इति अवधूतगीतायां सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीदत्त उवाच ॥ त्वद्यात्रया व्यापकता हता ते ध्यानेन चेतः परता हता ते ॥ स्तुत्या मया वाक्परता हता ते क्षमस्व नित्यं त्रिविधापराधान् ॥ १ ॥

कामैरहतधीर्दान्तो मृदुः शुचिरकिंचनः ॥
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥२॥
अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ॥
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥३॥
कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ॥
सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥ ४ ॥
अवधूतलक्षणं वर्णैर्ज्ञातव्यं भगवत्तमैः ॥
वेदवर्णार्थतत्त्वज्ञैर्वेदवेदान्तवादिभिः ॥ ५ ॥
आशापाशविनिर्मुक्त आदिमध्यान्तनिर्मलः ॥
आनन्दे वर्तते नित्यमकारं तस्य लक्षणम् ॥ ६ ॥
वासनावर्जिता येन वक्तव्यं च निरामयम् ॥
वर्तमानेषु वर्तेत वकारं तस्य लक्षणम् ॥ ७ ॥
धूलिधूसरगात्राणि धूतचित्तो निरामयः ॥
धारणाध्याननिर्मुक्तो धूकारस्तस्य लक्षणम् ॥ ८ ॥
तत्त्वचिंता धृता येन चिंताचेष्टाविवर्जितः ॥
तमोहंकारनिर्मुक्तस्तकारस्तस्य लक्षणम् ॥ ९ ॥
आत्मानं चामृतं हित्वा अभिन्नं मोक्षमव्ययम् ॥
गतो हि कुत्सितः काको वर्तते नरकं प्रति ॥ १० ॥
मनसा कर्मणा वाचा त्यज्यतां मृगलोचने ॥

न ते स्वर्गोऽपवर्गो वा सानन्दं हृदयं यदि ॥ ११ ॥
न जानामि कथं तेन निर्मिता मृगलोचना ॥
विश्वासघातकीं विद्धि स्वर्गमोक्षसुखार्गलाम् ॥ १२ ॥
मूत्रशोणितदुर्गन्धे ह्यमेध्यद्वारदूषिते ॥
चर्मकुण्डे ये रमन्ति ते लिप्यन्ते न संशयः ॥ १३ ॥
कौटिल्यदम्भसंयुक्ता सत्यशौचविवर्जिता ॥
केनापि निर्मिता नारी बन्धनं सर्वदेहिनाम् ॥ १४ ॥
त्रैलोक्यजननी धात्री सा भगी नरको ध्रुवम् ॥
तस्यां जातो रतस्तत्र हा हा संसारसंस्थितिः ॥१५॥
जानामि नरकं नारीं ध्रुवं जानामि बन्धनम् ॥
यस्यां जातो रतस्तत्र पुनस्तत्रैव धावति ॥ १६ ॥
भगादिकुचपर्यन्तं संविद्धि नरकार्णवम् ॥
ये रमन्ति पुनस्तत्र तरन्ति नरकं कथम् ॥ १७ ॥
विष्ठादिनरकं घोरं भगं च परिनिर्मितम् ॥
किमु पश्यसि रे चित्त कथं तत्रैव धावसि ॥ १८ ॥
भगेन चर्मकुण्डेन दुर्गन्धेन व्रणेन च ॥
खण्डितं हि जगत्सर्वं सदेवासुरमानुषम् ॥ १९ ॥
देहार्णवे महाघोरे पूरितं चैव शोणितम् ॥
केनापि निर्मिता नारी भगं चैव अधोमुखम् ॥२०॥
अन्तरे नरकं विद्धि कौटिल्यं बाह्यमण्डितम् ॥
ललितामिह पश्यन्ति महामन्त्रविरोधिनीम् ॥ २१ ॥
अज्ञात्वा जीवितं लब्धं भवस्तत्रैव देहिनाम् ॥
अहो जातो रतस्तत्र अहो भवविडम्बना ॥ २२ ॥
तत्र मुग्धा रमन्ते च सदेवासुरमानवाः ॥
ते यान्ति नरकं घोरं सत्यमेव न संशयः ॥ २३ ॥
अग्निकुण्डसमा नारी घृतकुम्भसमो नरः ॥

संसर्गेण विलीयेत तस्मात्तां परिवर्जयेत् ॥ २४ ॥
गौडी माध्वी तथा पैष्टी विज्ञेया त्रिविधा सुरा ॥
चतुर्थी स्त्री सुरा ज्ञेया ययेदं मोहितं जगत् ॥ २५ ॥
मद्यपानं महापापं नारीसंगस्तथैव च ॥
तस्माद्द्वयं परित्यज्य तत्त्वनिष्ठो भवेन्मुनिः ॥२६॥
चिन्ताक्रांतं धातुबद्धं शरीरं नष्टे चित्ते धातवो यान्ति नाशम् ॥ तस्माच्चित्तं सर्वतो रक्षणीयं स्वस्थे चित्ते बुद्धयः संभवन्ति ॥ २७ ॥
दत्तात्रेयावधूतेन निर्मितानन्दरूपिणा ॥
ये पठन्ति च शृण्वन्ति तेषां नैव पुनर्भवः ॥ २८ ॥

इति श्रीदत्तात्रेयकृतायामवधूतगीतायां स्वामिकार्तिकसंवादे स्वात्मसंवित्त्युपदेशेऽष्टमोध्यायः ॥ ८ ॥

---

॥ इति अवधूतगीता समाप्ता ॥

---

## ॥ अथ सूर्यगीता प्रारभ्यते ॥

ब्रह्मा उवाच ॥ प्रपंचसृष्टिकर्मेदं मम श्रीगुरुनायक ॥
अहार्यं द्विपरार्धान्तमाधिकारिकतावशात् ॥ १ ॥
इति त्वद्वदनाम्भोजात्सम्यग्विदितवानहम् ॥
तथाप्यत्र न मे चिन्ता जायते त्वत्कृपाबलात् ॥ २ ॥
त्वयि प्रसन्ने मय्येवं बोधानन्दस्वरूपतः ॥
पुनर्जन्मभयाभावाद्धीर एवास्मि वृत्तिषु ॥३॥
तथाऽपि कर्मभागेषु श्रोतव्यमवशिष्यते ॥
तत्सर्वं च विदित्वैव सर्वज्ञः स्यामहं प्रभो ॥४॥
जगज्जीवेश्वरादीनां प्रागुत्पत्तेर्निरंजनम् ॥
निर्विशेषमकर्मैकं ब्रह्मैवासीत्तदद्वयम् ॥ ५ ॥
तस्य जीवेशस्रष्टृत्वं प्रोच्यते वेदवादिभिः ॥
अकर्मणः कथं सृष्टिकर्मकर्तृत्वमुच्यते ॥ ६ ॥
सकर्मा सेन्द्रियो लोके दृश्यते न निरिन्द्रियः ॥
ब्रह्मणोऽतीन्द्रियत्वं च सर्वशास्त्रेषु घुष्यते ॥ ७ ॥
नश्यमानतयोत्पत्तिमत्त्वादाद्यस्य कर्मणः ॥
न मुख्यमवकल्पेताप्यनादित्वोपवर्णनम् ॥८॥
ब्रह्म चेत्कर्म कुर्वीत येनकेनापि हेतुना ॥
तथा च संसृतिस्तस्य प्रसज्येत तु नात्मनः ॥ ९ ॥
तस्मादाद्यस्य पुण्यस्य पापस्य च दयानिधे ॥
कर्मणो ब्रूहि मे स्पष्टमुपपत्तिं गुरूत्तम ॥ १० ॥
इत्युक्तो विधिना देवो दक्षिणामूर्तिरीश्वरः ॥
विचित्रप्रश्नसन्तुष्ट इदं वचनमब्रवीत् ॥ ११ ॥
श्रीगुरुमूर्तिरुवाच ॥ ब्रह्मन्साधुरयं प्रश्नस्तव प्रश्नविदां वर ॥
शृणुष्व सावधानेन चेतसाऽस्योत्तरं मम ॥ १२ ॥

प्रागुत्पत्तेरकर्मैकमकर्तृ च निरिन्द्रियम् ॥
निर्विशेषं परं ब्रह्मैवासीन्नात्रास्ति संशयः ॥ १३ ॥
तथाऽपि तस्य चिच्छक्तिसंयुतत्वेन हेतुना ॥
प्रतिच्छायात्मिके शक्ती मायाविद्ये बभूवतुः ॥१४॥
अद्वितीयमपि ब्रह्म तयोर्यत्प्रतिबिम्बितम् ॥
तेन द्वैविध्यमासाद्य जीव ईश्वर इत्यपि ॥ १५ ॥
पुण्यपापादिकर्तृत्वं जगत्सृष्ट्यादिकर्तृताम् ॥
अभजत्सेन्द्रियत्वं च सकर्मत्वं विशेषतः ॥ १६ ॥
यः स्वशक्त्या समुल्लास उदभूत्परमात्मनः ॥
स्वबन्धजनकं सूक्ष्मं तदाद्यं कर्म कथ्यते ॥ १७ ॥
न तेन निर्विशेषत्वं हीयते तस्य किंचन ॥
न च संसारबन्धश्च कश्चिद्ब्रह्मन्प्रसज्यते ॥ १८ ॥
पारमार्थिकसंसारी जीवः पुण्यादिकर्मवान् ॥
प्रातिभासिकसंसारी त्वीशः सृष्ट्यादिकर्मवान् ॥१९॥
असंसारि परं ब्रह्म जीवेशोभयकारणम् ॥
ततोऽप्यतीतं नीरूपं अवाङ्मनसगोचरम् ॥ २० ॥
कर्मवन्तौ परित्यज्य जीवेशौ ये महाधियः ॥
अकर्मवत्परं ब्रह्म प्रयान्त्यत्र समाधिभिः ॥ २१ ॥
ते विदेहविमुक्ता वा जीवन्मुक्ता नरोत्तमाः ॥
कर्माकर्मोभयातीतास्तद्ब्रह्मारूपमाप्नुयुः॥ २२ ॥
कर्मणा संसृतौ बद्धा मुच्यन्ते ते ह्यकर्मणा ॥
बन्धमोक्षोभयातीताः कर्मिणो नाप्यकर्मिणः ॥ २३ ॥
जीवस्य कर्मणा बन्धस्तस्य मोक्षश्च कर्मणा ॥
तस्माद्धेयं च कर्म स्यादुपादेयं च कर्म हि ॥२४॥
त्यक्ते कर्मणि जीवत्वमात्मनो गच्छति स्वयम्॥
गृहीते कर्मणि क्षिप्रं ब्रह्मत्वं च प्रसिध्यति ॥ २५ ॥

आविद्यकमशुद्धं यत्कर्म दुःखाय तन्नृणाम् ॥
विद्यासम्बन्धि शुद्धं यत् तत्सुखाय च कथ्यते ॥२६॥
विद्याकर्मक्षुरात्तीक्ष्णात् छिनत्ति पुरुषोत्तमः ॥
अविद्याकर्मपाशांश्चेत्स मुक्तो नात्र संशयः ॥ २७ ॥
सर्वस्य व्यवहारस्य विधे कर्मैव कारणम् ॥
इति निश्चयसिद्ध्यै ते सूर्यगीतां वदाम्यहम् ॥ २८ ॥
कर्मसाक्षिणमादित्यं सहस्रकिरणं प्रभुम् ॥
सप्ताश्वं सर्वधर्मज्ञमपृच्छदरुणः पुरा ॥ २९ ॥
अरुण उवाच ॥ भगवन् केन संसारे प्राणिनः संभ्रमन्त्यमी ॥
केनैतेषां निवृत्तिश्च संसाराद्वद सद्गुरो ॥ ३० ॥
इति पृष्टः स सर्वज्ञः सहस्रकिरणोज्वलः ॥
सूर्योऽब्रवीदिदं शिष्यमरुणं निजसारथिम् ॥ ३१ ॥
सूर्य उवाच ॥ अरुण त्वं भवस्यद्य मम प्रियतमः खलु ॥
यतः पृच्छसि संसारभ्रमकारणमादरात् ॥ ३२ ॥
भ्रमन्ति केवलं सर्वे संसारे प्राणिनोऽनिशम् ॥
न तु तत्कारणं केनाप्यहो किंचिद्विचार्यते ॥ ३३ ॥
तज्जिज्ञासुतया त्वं तु श्लाघ्योऽसि विबुधोत्तमैः॥
शृणुष्वारुण वक्ष्यामि तव संसारकारणम् ॥ ३४ ॥
पुण्यपापात्मकं कर्म यत्सर्वप्राणिसंचितम् ॥
अनादिसुखदुःखानां जनकं चाभिधीयते ॥ ३५ ॥
शास्त्रैः सर्वैश्च विहितं प्रतिषिद्धं च सादरम् ॥
कामादिजनितं तत्त्वं विद्धि संसारकारणम् ॥ ३६ ॥
पश्वादीनामभावेऽपि तयोर्विधिनिषेधयोः ॥
संसारस्य न लोपोऽस्ति पूर्वकर्मानुसारतः ॥ ३७ ॥
पूर्वं मनुष्यभूतानां पापकर्मवशादिह ॥
श्वखरोष्ट्रादिजन्मानि निकृष्टानि भवन्त्यहो ॥ ३८ ॥

पापकर्मसु भोगेन प्रक्षीणेषु पुनश्च ते ॥
प्राप्नुवन्ति मनुष्यत्वं पुनश्च श्वादिजन्मिताम् ॥ ३९ ॥
जननैर्मरणैरेवं पौनःपुन्येन संसृतौ ॥
भ्रमन्त्यब्धितरंगस्थदारुवद्धीमतां वर ॥४०॥
अरुण उवाच ॥ प्रक्षीणपापकर्माणः प्राप्तवन्तो मनुष्यताम् ॥
पुनश्च श्वादिजन्मानि केन गच्छन्ति हेतुना ॥४१॥
न हि दुर्जन्महेतुत्वं पुण्यानां युक्तमीरितुम् ॥
न च पुण्यवतां भूयः पापकर्मोपपद्यते ॥ ४२ ॥
पुण्यैर्विशुद्धचित्तानां ज्ञानयोगादिसाधनैः ॥
संसारमोक्षसंसिद्ध्या पापकर्माभसक्तितः ॥ ४३ ॥
जीवेषु पौनःपुन्यं चेदुत्तमाधमजन्मनाम् ॥
नियमेनाभिधीयेत येन केनापि हेतुना ॥ ४४ ॥
मोक्षशास्त्रस्य वैयर्थ्यमापतत्येव सर्वथा ॥
तस्मादपापिनां जन्म पुनश्चेति न युज्यते ॥ ४५ ॥
इत्युक्तो भगवानाह सर्वज्ञः करुणानिधिः ॥
रविः संशयविच्छेदनिपुणोऽरुणमादरात् ॥ ४६ ॥
रविरुवाच ॥ प्रक्षीणेष्वपि भोगेन पापकर्मसु देहिनः ॥
पुनश्च पापकर्माणि कुर्वन्तो यान्ति दुर्गतिम् ॥४७॥
तानि दुर्जन्मबीजानि कामात्पापानि देहिनाम् ॥
पुनरप्युपपद्यन्ते पूर्वपुण्यवतामपि ॥ ४८ ॥
सकामानां च पुण्यानां भोगहेतुतया नृणाम् ॥
न चित्तशुद्धिहेतुत्वं क्वचिद्भवितुमर्हति ॥ ४९ ॥
कुतश्चाशुद्धचित्तानां ज्ञानयोगादिसंभवः ॥
ज्ञानयोगादिहीनानां कुतो मोक्षश्च संसृतेः ॥५०॥
कामेन हेतुना सत्स्वप्युत्तमाधमजन्मसु ॥
मोक्षशास्त्रस्य सार्थक्यं नैष्काम्योदयहेतुकम् ॥५१॥

सुखदुःखोपभोगेन यदा निर्वेदमागतः ॥
निष्कामत्वमवाप्नोति स्वविवेकपुरस्सरम् ॥ ५२ ॥
ततःप्रभृति कैश्चित्स्याज्जन्मभिर्ज्ञानयोगवान् ॥
श्रवणादिप्रयत्नैर्हि मुक्तिः स्वात्मन्यवस्थितिः ॥५३॥
कर्माध्यक्षं परात्मानं सर्वकर्मैकसाक्षिणम् ॥
सर्वकर्मविदूरन्तं कर्मवान्कथमाप्नुयात् ॥ ५४ ॥
पुण्येष्वपि च पापेषु पौर्विकेषु तु भोगतः ॥
क्षपितेषु परात्मा स स्वयमाविर्भविष्यति ॥५५॥
कर्तृभिर्भुज्यते जीवैः सर्वकर्मफलं न तु ॥
साक्षिणा निर्विकल्पेन निर्लेपेन परात्मना ॥५६॥
जीवानां तदनन्यत्वात्भोगस्यावसरः कुतः ॥
इति केचन शंकन्ते वेदान्तापातदर्शिनः ॥५७॥
परमार्थदशायां हि तदनन्यत्वमिष्यते ॥
व्यवहारदशायां नानुपपत्तिश्च काचन ॥५८॥
परमार्थदशारूढे जीवन्मुक्तेऽपि कर्मणाम् ॥
भोगोऽङ्गीक्रियते सम्यक् दृश्यते च तथा सति ॥५९॥
अज्ञानां व्यवहारैकनिष्ठानां तदनन्यता ॥
अभोक्तृता च केनैव वक्तुं शक्या मनीषिणा ॥६०॥
ज्ञानिनः कर्मकर्तृत्वं दृश्यमानमपि स्फुटम् ॥
उत्पादयेत्फलं नेति मन्यन्ते स्वप्नकर्मवत् ॥६१॥
तदयुक्तं न हि स्वप्ने पापकर्तुः स्वतन्त्रता ॥
जाग्रति प्राणिनः कर्म स्वातन्त्र्यं वर्तते खलु ॥६२॥
तिरश्चां जागरावस्था यथा भोगैककारणम् ॥
तथा स्वप्नदशा नृणां फलभोगैककारणम् ॥६३॥
नृणां च जागरावस्था बालानां स्यात्तथा न तु ॥
यूनां वृद्धतमानां वा किमुत स्वात्मबोदिनाम् ॥६४॥

भाविभोगार्थकं कर्म जाग्रत्येव नृणां भवेत् ॥
फलं तु कर्मणः स्वप्ने जाग्रत्यापि च युज्यते ॥६५॥
कर्मण्यध्यस्य भोगं ये भोगेऽध्यस्याथ कर्म च ॥
कर्म तद्भोगयोर्भेदमज्ञात्वाहुर्यथेप्सितम् ॥६६॥
तेषां मन्दधियां ज्ञानवादिनां पापकारिणाम् ॥
कथं कृतार्थतां ब्रूयामध्यासक्षयसंभवाम् ॥६७॥
कर्मण्यकर्मधीर्येषामकर्मणि च कर्मधीः ॥
ते चाध्यासवशा मन्दा ज्ञानिनः स्वैरचारिणः ॥६८॥
वर्णाश्रमादिधर्माणामद्वैतं कर्मणैव ये ॥
अनुतिष्ठन्ति ते मूढाः कर्माकर्मोभयच्युताः ॥६९॥
स्वानुभूतिं वरिष्ठां तां सर्वानुष्ठानवर्जिताम् ॥
सर्वानुष्ठानवन्तोऽपि सिद्धामाहुर्वतात्मनाम् ॥७०॥
अभेदध्यानसाध्यां तां स्वानुभूतिं महत्तमाम् ॥
विचारसाध्यां मन्यन्ते ते महापापकर्मिणः ॥७१॥
निदिध्यासनमप्यात्मा भेदाभिध्यानलक्षणम् ॥
उपेक्षन्ते वृथाद्वैतज्ञानवादैकमोहतः ॥ ७२ ॥
आश्रित्यैव विचारं ये वाक्यार्थमननात्मकम् ॥
मन्यन्ते कृतकृत्यत्वमात्मनां ते हि मोहिताः ॥७३॥
आद्यज्ञानोदये काम्यकर्मत्याग उदीर्यते ॥
द्वितीयसम्यग्ज्ञाने तु नैमित्तिकनिराकृतिः ॥ ७४ ॥
तृतीयपूर्णज्ञाने च नित्यकर्मनिराकृतिः ॥
चतुर्थाद्वैतबोधे तु सोऽतिवर्णाश्रमी भवेत् ॥७५॥
नित्यनैमित्तिकोपेतज्ञानान्मुक्तिः क्रमाद्भवेत् ॥
सम्यग्ज्ञानात्तु सा जीवन्मुक्तिर्नित्यैकसंयुतात् ॥७६॥
पूर्णज्ञानाद्विदेहाख्या शाश्वती मुक्तिरिष्यते ॥
यथा नैष्कर्म्यसंसिद्धिर्जीवन्मुक्ते निरंकुशा ॥ ७७ ॥

अत्रैवं सति नैष्कर्म्यं ज्ञानकर्मसमुच्चयात् ॥
सिध्येत्क्रमेण सद्यो वा नान्यथा कल्पकोटिभिः ॥७८॥
यावद्विदेहमुक्तिः सा न सिध्यति शरीरिणः ॥
तावत्समुच्चयः सिद्धो ज्ञानोपासनकर्मणाम् ॥७९॥
तस्माद् ज्ञात्वा परात्मानं ध्याननिष्ठो महामतिः ॥
भूयान्निजाश्रमाचारानिरतः श्रेयसे सदा ॥८०॥
ज्ञानोपास्ती कर्मसापेक्षके ते कर्मोपास्ती ज्ञानसापेक्षके च ॥ कर्मज्ञाने चान्यसापेक्षके तन्मुक्त्यै प्रोक्तं साहचर्यं त्रयाणाम् ॥ ८१ ॥
ज्ञानोपास्ती स्वीयकर्मस्वपास्याप्येकं मुक्तिर्नैव कस्यापि सिध्येत् ॥ तस्माद्धीमानाश्रयेदप्रमत्तस्त्रीण्युक्तानि श्रद्धयाऽऽदेहपातात् ॥ ८२ ॥

॥ इति सूर्यगीतायां प्रथमोऽध्यायः ॥ १ ॥

---

सूर्य उवाच ॥ अथातः संप्रवक्ष्यामि कर्मणां पंचभूमिकाः ॥
उत्तरोत्तरमुत्कर्षाद्विद्धि सोपानपंक्तिवत् ॥ १ ॥
प्रथमा तान्त्रिकी प्रोक्ता परा पौराणिकी मता ॥
स्मार्ता तृतीया तुर्या तु श्रौता संकीर्तिता बुधैः ॥ २ ॥
पंचमी त्वौपनिषदा विबुधोत्तमसम्मता ॥
यस्याः परं न किंचित्स्याद्वाच्यं ज्ञेयं च सत्तम ॥ ३ ॥
स्वेच्छं कर्माणि कुर्वन्यः प्रमाणाश्रयणं विना ॥
तन्त्रोक्तानि करोत्येष कर्मी प्राथमिको मतः ॥ ४ ॥
तानि तन्त्रोक्तकर्माणि त्यक्त्वा पौराणिकानि यः ॥
करोति तन्त्रसम्बन्धीन्ययं कर्मी द्वितीयकः ॥ ५ ॥
त्यक्त्वा तान्यपि यः स्मार्तान्यनुतिष्ठाति सर्वदा ॥
श्रुतिसम्बन्धवन्त्येष तृतीयः कर्म्युदीर्यते ॥ ६ ॥

यश्च तान्यपि सन्त्यज्य श्रौतान्येवाचरत्ययम् ॥
कर्मी धर्मार्थकामानां स्थानं तुर्योऽभिधीयते ॥ ७ ॥
श्रौतान्यपि च यस्त्यक्त्वा सदौपनिषदानि वै ॥
करोति श्रद्धया कर्माण्ययं मोक्षी तु पंचमः ॥ ८ ॥
यान्यौपनिषदानां स्युरविरोधीनि कर्मणाम् ॥
श्रौतादीनि सुसंग्राह्यान्यमलानि मुमुक्षुभिः ॥ ९ ॥
कर्माण्युपनिषत्सु स्युर्ब्रह्मैकार्थासु वै कथम् ।
इति शंक्यन्नकुर्वन् हि विधिरस्ति जिजीविषेत् ॥ १० ॥
ईशावास्यादिवेदान्तप्रोक्तान्यामरणादपि ॥
कुर्वन्नेव विमुच्येत ब्रह्मवित्प्रवरोऽस्तु वा ॥ ११ ॥
यतयस्त्यक्तगार्हस्थ्या अपि स्वोचितकर्मभिः ॥
आश्रमं पालयन्तः स्वं कैवल्यं प्राप्नुयुः परम् ॥ १२ ॥
कर्म प्रजाधनानां यस्त्यागः समभिधीयते ॥
कामैकविषयत्वेन स यतेर्न विरुध्यते ॥ १३ ॥
संन्यासिनो हि कर्माणि नित्यानि विमलानि च ॥
श्रेयोर्थानि विधीयन्ते परिव्राजेऽजजन्मना ॥ १४ ॥
अपेतकाम्यकर्माणो यतयोऽन्येऽपि वा जनाः ॥
सद्यः क्रमेण वा मुक्तिमाप्नुयुर्नात्र संशयः ॥ १५ ॥
पंचमीं भूमिमारूढः ज्ञानोपासनकर्मभिः ॥
शोकमोहादिनिर्मुक्तः सर्वदैव विराजते ॥ १६ ॥
न ज्ञानेन विनोपास्तिर्नोपास्त्या च विनेतरत् ॥
कर्मापि तेन हेतुत्वं पूर्वपूर्वस्य कथ्यते ॥ १७ ॥
यद्वा यावन्न हि ज्ञानं तावन्नोपासनं मतम् ॥
यावन्नोपासनं तावन्न ज्ञानं च कथंचन ॥ १८ ॥
ज्ञानं यावन्न कर्मापि न तावन्मुख्यमीर्यते ॥
यावन्न कर्म तावच्च न ज्ञानं साधुसम्मतम् ॥ १९ ॥

यावन्नोपासनं तावन्न कर्मापि प्रशस्यते ॥
यावन्न कर्मोपास्तिश्च न तावत्सात्त्विकी मता ॥ २० ॥
ज्ञानोपासनकर्माणि सापेक्षाणि परस्परम् ॥
प्रयच्छन्ति परां मुक्तिं नान्यथेत्युक्तमेव ते ॥ २१ ॥
एतेषु साधनेष्वेकं त्रिषु यत्किंचिदत्र यः ॥
त्यजेदसद्गुरूक्त्या स नाश्नुवीत परामृतम् ॥ २२ ॥
नानाविधानि ज्ञानानि नानारूपा उपास्तयः ॥
नानाविधान्नि कर्माणि श्रुत्यन्तादिषु संविदुः ॥ २३ ॥
सम्बन्धस्तु त्रयाणां स्यादुचितः शिष्टवर्त्मना ॥
निपुणैश्च सुविज्ञेयमनुबन्धचतुष्टयम् ॥ २४ ॥
अनुबन्धाविरोधेन त्रयाणां चेत्समुच्चयः ॥
कृतः स सद्यः प्राप्नोति तृप्तिं मानवपुंगवः ॥२५॥
अनुबन्धपरिज्ञानं विना मुक्त्यै प्रयत्नवान् ॥
न मुक्तिं विन्दते कोऽपि साधकादिविपर्ययात् ॥२६॥
भोगाधिकारी मोक्षं चेत्फलमिच्छेत्कदाचन ॥
अनुबन्धस्य विज्ञानं कथं नु स्यात्समंजसम् ॥२७॥
अधिकारानुगुण्येन सम्बन्धः परिकीर्तितः ॥
तत्सम्बन्धानुगुण्येन विषयश्च प्रकीर्तितः ॥ २८ ॥
विषयानुगुणं प्रोक्तं प्रयोजनमतो बुधैः ॥
अनुबन्धाः सुविज्ञेया ज्ञानोपासनकर्मसु ॥ २९ ॥
वर्णाश्रमाणां सर्वेषामनुष्ठेयेषु कर्मसु ॥
अविद्वान् संशयात्मा चेदनुवर्तेत पूर्वकान् ॥ ३० ॥
विद्वान् चेत्संशयात्माभूच्छास्त्रे स्वमतिनिश्चितम् ॥
आचरेत्तु न शिष्टस्याप्यबुधस्य पितुर्मतम् ॥ ३१ ॥
स्वकूटस्थबुधाचारः साधुसंविदितो यदि ॥
विद्वानपि त्यजेत्स्वीयं तद्विरुद्धमसम्मतम् ॥ ३२ ॥

पूर्वाचारानुसरणं कर्ममात्रे नियम्यते ॥
ज्ञानोपास्त्योस्त्वबाध्यत्वादन्यथाऽपि च युज्यते ॥३३॥
पूर्वकेष्वपि सांख्येषु स्वस्य युज्येत योगिता ॥
अन्यथाऽपि च नैतेन प्रत्यवायः कियानपि ॥३४॥
यदि पूर्वविरोधेन कुर्यात्कर्माणि मानवः ॥
स मूर्खो भवति क्षिप्रं प्रत्यवायी न संशयः ॥३५॥
नैमित्तिकानामकृतौ काम्यानां च न कश्चन ॥
प्रत्यवायोऽत्र वाऽमुत्र लोके भवितुमर्हति ॥ ३६ ॥
नित्यानां त्वकृतावत्रामुत्र वा प्रत्यवायभाक् ॥
भवेदवश्यकार्यत्वादाश्रमच्युतिहेतवे ॥ ३७ ॥
न स्यादकरणं हेतुरभावात्मतया ततः ॥
नित्याकरणहेतुः प्राक्कर्म चेत्प्रत्यवायकृत् ॥ ३८ ॥
अकृतौ प्रत्यवायस्य श्रवणं व्यर्थमेव तत् ॥
पूर्वकर्मफलादन्यफलस्यानवधारणात् ॥३९॥
अतो नाभावता युक्ता नित्यकर्माकृतेर्यथा ॥
निषिद्धाचरणं भावस्तथैवाकरणं मतम् ॥ ४० ॥
विहिताकरणस्यापि भावात्मत्वोररीकृतेः ।
आस्तिकत्वमिह प्राहुरन्यथा नास्तिकत्वतः ॥ ४१ ॥
पूर्वकर्मफलस्यापि नित्याकरणकर्मणः ॥
पापस्य दुःखहेतुत्वं पृथगेवावधार्यते ॥ ४२ ॥
अज्ञानाद्विहिते लुप्ते ज्ञानाद्वा कर्मणि स्वके ।
प्रायश्चित्ती भवेन्मर्त्यो लभेद्दुर्जन्म वा पुनः ॥४३॥
बुद्धिपूर्वं त्यजन्नित्यमनुतापविवर्जितः ।
अनाश्रमी नरो घोरं रौरवं नरकं व्रजेत् ॥ ४४ ॥
जीवन्मुक्तस्य नित्येषु यदि लुप्तानि कानिचित् ।
न तेन प्रत्यवायोऽस्ति कैश्चित्स्वाश्रमासिद्धितः ॥ ४५ ॥

प्रायश्चित्तनिवर्त्यानि निषिद्धाचरणानि च ॥
प्रायश्चित्तमकुर्वन्तमपि लिम्पन्ति नैव तम् ॥ ४६ ॥
कर्म शुद्धमशुद्धं च द्विविधं प्रोच्यते श्रुतौ ॥
तत्राशुद्धेन बन्धः स्यान्मोक्षः शुद्धेन देहिनाम् ॥४७॥
अशुद्धं च तथा प्रोक्तं पुण्यं पापमिति द्विधा ॥
परस्परं न बाधोऽस्ति तयोरत्राविरोधतः ॥ ४८ ॥
सुखदुःखे समस्तस्य जन्तोर्याभ्यां प्रसिध्यतः ॥
तयोर्न वशमागच्छेच्छुद्धमात्रेण संस्थितः ॥ ४९ ॥
शुद्धं नित्यमनन्तं यत्सत्यं कर्म निगद्यते ॥
नित्यशुद्धविमुक्तात्मसाक्षात्कारार्थकं विदुः ॥ ५० ॥
विशुद्धैः कर्मभिः शुद्धानीन्द्रियाणि भवन्त्यलम् ॥
इन्द्रियेषु विशुद्धेषु मनः शुद्धं स्वतो भवेत् ॥५१॥
शुद्धे मनसि जीवोऽपि विशुद्धो ब्रह्मणैकताम् ॥
उपेत्य केवलानन्दं निष्कलं परमश्नुते ॥ ५२ ॥
बाह्यमाभ्यन्तरं चेति शुद्धं कर्म द्विधोच्यते ॥
बाह्यं स्नानादि नित्यं स्याद्ध्यानाद्याभ्यन्तरं परम् ॥५३॥
अतः शुद्धैरशुद्धानां नाशो भवितुमर्हति ॥
न शुद्धव्यतिरेकेण प्रयत्नान्तरमिष्यते ॥ ५४ ॥
विशुद्धकर्मनिष्ठास्ते यतयोऽन्येऽपि वा जनाः ॥
अत्रैव परिमुच्यन्ते स्वातंत्र्येण परामृतात् ॥ ५५ ॥
आरूढः पंचमीं भूमिं शुद्धेनैवावतिष्ठते ॥
अतोऽत्र मतिमान्नित्यं पंचम्यभ्यासमाचरेत् ॥ ५६ ॥
इन्द्रियाणि विशुद्धान्यप्यशुद्धानां विवर्जनात् ॥
शुद्धानामप्यनुष्ठानाद्धीमांस्तानि न विश्वसेत् ॥ ५७ ॥
अशुद्धेषु प्रवर्तेरन् पूर्ववासनया स्वतः ॥
तेभ्यो नियम्य शुद्धेषु नित्यं तानि प्रवर्तयेत् ॥ ५८ ॥

इन्द्रियाणां च मनसः प्रसादं शुद्धकर्मभिः ॥
उपलभ्यापि दुर्बुद्धिरशुद्धेह प्रवर्तते ॥ ५९ ॥
प्रसन्नमनसः स्वास्थ्यात्सुखं किंचित्प्रजायते ॥
तावन्मात्रेण तृप्तस्तु क्रमेणाधः पतेन्नरः ॥ ६० ॥
तृप्तिरल्पसुखप्राप्तौ महानर्थैककारणम् ॥
अतस्तृप्तिमनाप्यैव शुद्धं नित्यं समाचरेत् ॥ ६१ ॥
यथा विषयभोगेषु विना तृप्तिं पुनः पुनः ॥
प्रवर्तते तथा नित्यं यः शुद्धेषु स बुद्धिमान् ॥ ६२ ॥
शुद्धं शुद्धेन वर्धेत शुद्धः शुद्धं ततो व्रजेत् ॥
अशुद्धमप्यशुद्धेनाशुद्धोऽशुद्धं तथा नरः ॥ ६३ ॥
यदेन्द्रियमनःप्राणाः शान्ताः सुप्ताविवाभवन् ॥
शुद्धाशुद्धोभयातीतस्तदा तृप्तिं परां व्रजेत् ॥ ६४ ॥
यावन्नेन्द्रियसंशान्तिर्यावन्न मनसोऽप्ययः ॥
यावन्न प्राणशान्तिश्च तावच्छुद्धं समाचरेत् ॥ ६५ ॥
परस्परोपयोगित्वाद्बाह्याभ्यन्तरशुद्धयोः ॥
वियोगो नैव कार्योऽत्र बुधैरादेहमोचनात् ॥ ६६ ॥
यः शुद्धपक्षो हंसः स ऊर्ध्वं गच्छति चाम्बरे ॥
अशुद्धपक्षः श्येनस्तु व्योमगोऽपि पतत्यधः ॥ ६७ ॥
छिन्नैकपक्षो हंसोऽपि नोर्ध्वं गन्तुमितोऽर्हति ॥
अतः शुद्धद्वयं मुख्यं साधनं मुक्तये विदुः ॥६८॥
यद्यप्याभ्यन्तरं शुद्धं बाह्यशुद्धनिवर्तकम् ॥
भवत्येतेन साम्यं न तयोरिति च केचन ॥ ६९ ॥
तथाऽपि बाह्यविलयसमकाललयात्परम् ॥
आभ्यन्तरं समं तेन बाह्येन स्यात्स्वकर्मणा ॥७०॥
आभ्यन्तरं च तच्छुद्धं कर्म द्विविधमुच्यते ॥
सम्प्रज्ञातसमाध्याख्यमसम्प्रज्ञातनाम च ॥ ७१ ॥

जीवन्मुक्तेः पुरावृत्तमाद्यं कर्म स्वमानसम् ॥
पुरा विदेहमुक्तेस्तु वृत्तमन्यत्स्वमानसम् ॥ ७२ ॥
मानसत्वात्समाधेश्च कर्मत्वोक्तिर्न दूष्यते ।
अनन्यविषयत्वाच्च तत्फलं नैव नश्वरम् ॥ ७३ ॥
अन्तःशुद्धिर्बहिःशुद्धिं यथा नृणामपेक्षते ॥
बहिःशुद्धिस्तथैवान्तःशुद्धिं च नियमेन हि ॥ ७४ ॥
यस्य कर्मसु शुद्धेष्वप्यौदासीन्यं विजायते ।
तस्यैव जन्मसांकर्यमनुमेयं विपश्चिता ॥ ७५ ॥
विरोधो जायते यस्य ज्ञानकर्मसमुच्चये ॥
तस्यैव जन्मसांकर्यमनुमेयं विपश्चिता ॥ ७६ ॥
यः श्रौतं कर्म हित्वान्यत्तान्त्रिकं समुपाश्रयेत् ॥
तस्यैव जन्मसांकर्यमनुमेयं विपश्चिता ॥ ७७ ॥
यश्चान्तरं च तत्कर्म मन्यते मन्दगोचरम् ॥
तस्यैव जन्मसांकर्यमनुमेयं विपश्चिता ॥ ७८ ॥
अशुद्धकर्मनिष्ठः सन् शुद्धं निन्दति यः सदा ॥
तस्यैव जन्मसांकर्यमनुमेयं विपश्चिता ॥ ७९ ॥
शुद्धं पश्यति यः शान्तमाक्षिरोगीव भास्करम् ॥
तस्यैव जन्मसांकर्यमनुमेयं विपश्चिता ॥ ८० ॥
विशुद्धवंशप्रभवं महामतिं विशुद्धबाह्यान्तरकर्मभास्वरम् ॥ विशुद्धवेदान्तरहस्यवेदिनं विद्वेष्टि यः संकर एव नेतरः ॥ ८१ ॥
अशुद्धवंशप्रभवं सुदुर्मतिं स्वशुद्धकर्मद्वयनष्टतेजसम् ॥
अशुद्धतन्त्रार्थविदं नराधमं यः श्लाघते संकर एव नेतरः ॥ ८२ ॥

इति सूर्यगीतायां द्वितीयोऽध्यायः ॥ २ ॥

---

अथातः संप्रवक्ष्यामि ममान्तर्यामिणं शिवम् ॥
यः सर्वकर्मणां साक्षी निर्लेपः प्रभुरीश्वरः ॥ १ ॥
त्रिनेत्रं नीलकण्ठं यं सांबं मृत्युंजयं हरम् ॥
ध्यात्वा संसृतिमोक्षः स्यात्तं नमामि महेश्वरम् ॥२॥
सर्वेषां कर्मणामेकः फलदाता य उच्यते ॥
स एव मृड ईशानः सर्वज्ञः सर्वशक्तिमान् ॥३॥
यस्य स्मरणमात्रेण निवर्तन्तेऽखिलापदः ॥
संपदश्चेह लभ्यन्ते सोऽन्तर्यामी शिवो हरः ॥ ४ ॥
येनैव सृष्टमखिलं जगदेतच्चराचरम् ॥
यस्मिंस्तिष्ठति नश्यत्यप्येष एको महेश्वरः ॥५ ॥
यं नमन्ति सुराः सर्वे स्वस्वाभीष्टप्रसिद्धये ॥
स्वातन्त्र्यं यस्य सर्वत्र सोन्तर्यामी महेश्वरः ॥ ६ ॥
उमार्धविग्रहः शंभुः त्रिनेत्रः शशिशेखरः ॥
गंगाधरो महादेवः सोन्तर्यामी दयानिधिः ॥ ७ ॥
श्रुतिस्मृतिपुराणेषु यस्यैवाधिक्यमिष्यते ॥
यस्याधिक्यस्मृतेर्मुक्तिः सोन्तर्यामी पुरातनः॥ ८ ॥
यन्नामजपमात्रेण पुरुषः पूज्यते सुरैः ॥
यमाहुः सर्वदेवेशं सोन्तर्यामी गुरूत्तमः ॥ ९ ॥
यदाख्यामृतपानेन संतृप्ता मुनयोऽखिलाः ॥
न वाञ्छन्ति महाभोगान् सोन्तर्यामी जगत्पतिः ॥१०॥
अरुण उवाच ॥ सद्गुरो भास्कर श्रीमन् सर्वतत्त्वार्थकोविद ॥
श्रुतिस्मृतिपुराणेषु ह्यन्तर्याम्यन्यथा श्रुतः ॥११ ॥
सत्यं ज्ञानमनन्तं यत्प्रसिद्धं ब्रह्म निष्कलम् ॥
निर्गुणं निष्क्रियं शान्तं केवलं सर्वगं परम् ॥ १२ ॥
तदेव सर्वान्तर्यामि श्रुतं सर्वान्तरत्वतः ॥
वरेण्यं सवितुस्ते च गायत्र्यां तद्धि कथ्यते ॥ १३ ॥

अशरीरस्य तस्यैव ह्यादिमध्यान्तवर्जनात् ॥
आकाशवद्विभुत्वेन सर्वान्तर्यामितोचिता ॥ १४ ॥
शिवस्य सशरीरस्य साम्बस्य सगुणस्य तु ॥
अविभुत्वेन सा नैव युज्यते भास्कर प्रभो ॥ १५ ॥
सगुणैकप्रधानैश्च विशिष्टाद्वैतवादिभिः ॥
कैश्चिद्ब्रह्महरीशानामन्तर्यामित्वमुच्यते ॥ १६ ॥
सर्वज्ञत्वादिधर्माणां समत्वं च त्रिमूर्तिषु ॥
मत्वैवोपासते विप्राः ते गायत्रीपरायणाः ॥ १७ ॥
केचिद् द्रुहिण एव स्यादन्तर्यामी स वाक्पतिः ॥
नान्यौ हरिहरौ कर्मप्रसिद्धेरिति वै विदुः ॥ १८ ॥
केचित्तु विष्णुरेव स्यादन्तर्यामी रमापतिः ॥
न विधीशौ परोपास्तिप्रसिद्धेरिति वै विदुः ॥ १९ ॥
केचिच्च शिव एकः स्यादन्तर्यामी ह्युमापतिः ॥
नान्यौ ब्रह्महरी ज्ञानप्रसिद्धेरिति संविदुः ॥ २० ॥
त्वदुक्तरीत्या त्वाधिक्यं ज्ञानोपासनकर्मसु ॥
कर्मणोऽवगतं तेन विधेरेव प्रसिध्यति ॥ २१ ॥
एष पक्षः समीचीनस्तव नैव भविष्यति ॥
तस्मादनिश्चितार्थं मां कुरुष्वासंशयं प्रभो ॥ २२ ॥
सूर्य उवाच ॥ सम्यक्पृष्टं त्वया धीमन्नरुण शृणु सादरम् ॥
वक्ष्यामि निश्चितार्थं ते श्रुतिस्मृत्यादिभिः स्फुटम् ॥२३॥
अन्तर्यामी द्विधा प्रोक्तः सगुणो निर्गुणोऽपि च ॥
चरस्य केवलं त्वाद्यश्चरस्यान्योऽचरस्य च ॥२४॥
अहं हि चर एवास्मि मदन्तर्यामिणावुभौ ॥
गायत्र्यां चावगन्तव्यौ देवौ सगुणनिर्गुणौ ॥२५॥
निर्गुणश्चावगन्तव्यः सगुणद्वारतोऽखिलैः ॥
अतोऽध्रुवं शिवं साक्षान्मदन्तर्यामिणं तव ॥२६॥

कारणत्वं यथा सिद्धं ब्रह्मणः परमात्मनः ॥
यथा शिवस्य साम्बस्य कार्यत्वं च सतां मतम् ॥२७॥
तथा शिवस्य हेतुत्वं विष्णोः कार्यत्वमप्यथ ॥
विष्णोश्च हेतुतां तद्वद्विधेर्विद्धि च कार्यताम् ॥२८॥
ब्रह्मा विष्णुः शिवो ब्रह्म ह्युत्तरोत्तरहेतवः ॥
इति जानन्ति विद्वांसो नेतरे मायया वृताः ॥२९॥
विशिष्टाद्वैतिनो वाऽन्ये सगुणैकाभिमानिनः ॥
अशरीरानभिज्ञत्वान्मायापरवशा ध्रुवम् ॥ ३० ॥
सर्वज्ञत्वादिधर्माणां कथं साम्यं त्रिमूर्तिषु ॥
त्रयाणां च गुणानां हि वैषम्यं सर्वसंमतम् ॥३१॥
गुणत्रयवशात्तेषां वैषम्यं विद्धि सुस्थितम् ॥
ब्रह्मा हि राजसः प्रोक्तो विष्णुस्तामस उच्यते ॥३२॥
रुद्रः स सात्त्विकः प्रोक्तः मूर्तिवर्णैश्च तादृशाः ॥
चित्स्वरूपानुभूत्या च तारतम्यं निगद्यते ॥ ३३ ॥
निर्विशेषपरब्रह्मानन्यत्वेन तु ते समाः ॥
तथाऽपि शिवशब्दस्य परब्रह्मार्थकत्वतः ॥ ३४ ॥
साक्षिणा निर्विकारेण चिन्मात्रेण महात्मना ॥
सदाशिवेन नित्येन केवलेन समो न हि ॥ ३५ ॥
साम्बस्य चन्द्रचूडस्य नीलकण्ठस्य शूलिनः ॥
उत्कर्षोऽस्ति स्वतःसिद्धः किं मया प्रतिपाद्यते ॥३६॥
आदौ मां जनयामास ब्रह्मा साक्षाच्चतुर्मुखः ॥
यथा तथा विरिंचिं तं श्रीमान्नारायणो हरिः ॥३७॥
यतोऽभवन्महाविष्णुर्ममारुण पितामहः ॥
ततो मे सुप्रसिद्धाभूत्सूर्यनारायणाभिधा ॥ ३८ ॥
नैतेन सकलेशस्य प्रपितामहतावशात् ॥
सर्वोत्कृष्टत्वसंसिद्ध्या लुप्यते ह्यान्तरात्मना ॥३९॥

अथ वा योगवृत्त्या स्याच्छिवो नारायणाभिधः ॥
तद्दृष्टिर्मयि कर्तव्योपासकैरिति सन्मतम् ॥ ४० ॥
कर्मोपासनबोधेषु ब्रह्मविष्णुशिवाः क्रमात् ॥
प्रसिद्धा इति संत्यज्य धियं शृणु वचो मम ॥४१॥
त्रिषु त्रयः प्रसिद्धाः स्युस्तारतम्येन चारुण ॥
काम्यकर्मप्रधानोऽस्ति स्वयंभूश्चतुराननः ॥४२॥
नैमित्तिकप्रधानस्तु विष्णुः कमललोचनः ॥
नित्यकर्मप्रधानः स शिवः साक्षात्त्रिलोचनः ॥४३॥
मूर्त्युपास्तौ विधिर्मुख्यस्त्वंशोपास्तौ हरिर्मतः ॥
निरंशोपासने मुख्यो नीलकण्ठो हरो मतः ॥४४॥
ज्ञाने श्रवणजे ब्रह्मा विज्ञाने मननोदिते ॥
विष्णुः स सम्यग्ज्ञाने तु निदिध्यासनजे शिवः ॥ ४५॥
अत्रैवं सति कस्याभूदाधिक्यमरुणाधुना ॥
त्वमेव सम्यगालोच्य विनिश्चिनु महामते ॥ ४६ ॥
पुरा कश्चिन्महान्धीरः शिवभक्ताग्रणीर्द्विजः ॥
शिवाख्याजपसंसक्तश्चचार भुवि निस्पृहः ॥४७॥
स्वाश्रमाचारनिरतो भस्मरुद्राक्षभूषणः ॥
सर्वशास्त्रार्थतत्त्वज्ञः कामक्रोधादिवर्जितः ॥ ४८ ॥
शमादिषट्कसम्पन्नः शिवभक्तजनादरः ॥
शिवस्य वैभवं स्मृत्वा श्रुतिस्मृतिपुराणगम् ॥४९॥
सर्वेश्वरस्य साम्बस्य त्रिनेत्रस्य दयानिधेः ॥
सदाशिवस्य माहात्म्यं स्वत एवेदमब्रवीत् ॥५०॥
पश्वादिभ्यो वरिष्ठाः क्षितिगतमनुजास्तेभ्य एवेन्द्रमु-
ख्यः देवास्तेभ्यो विधाता हरिरपि च ततः शंकरो
यस्त्रिनेत्रः॥ नान्योऽस्माच्छंकरात्तु श्रुतिषु निगदितो
वरिष्ठः समो वा सर्वान्विष्ण्वादिकांस्तं न हि वयमधुना

नूनमेवाश्रयामः ॥ ५१ ॥
मूलाधारे गणेशस्तदुपरि तु विधिर्विष्णुरस्मात्ततोऽयं रुद्रस्थाने चतुर्थे श्रुतिरपि च तथा प्राह शांतं चतुर्थम् ॥ अस्मादन्यः शिवोऽस्ति त्रिपुरहर इतो वा सदाद्यः शिवोऽस्ति स्वस्थोऽयं द्वादशान्तप्रबलनटनकृच्चापि साक्षात्सभेशः ॥ ५२ ॥
रौद्री शक्तिस्तथा स्यादयमपि च हरिः शाक्त एवं विरिंचो मन्तव्यो वैष्णवोऽमी सनकमुखमहाब्राह्मणा ब्राह्मणाश्च ॥ तस्मादेवं विभक्ते न हि भवति हरेरंशितांशांशिभावे साक्षादप्यत्र नित्यं परमशिवमहं चांशिनं तं नमामि ॥ ५३ ॥
शम्भोरन्यन्न पश्याम्यहमिह परमे व्योम्नि सोमाच्छ्रुतौ वा यस्यैवैतेन भासा जगदखिलमिदं भासते चैत्यरूपम् ॥ यच्छीर्षांघ्री दिदृक्षू द्रुहिणमुररिपू सर्वशक्त्याप्यदृष्ट्वा खेदन्तौ जग्मतुस्तं परमशिवममुं त्वां विना कं नु वन्दे ॥ ५४ ॥
यं विष्णुर्नावपश्यत्यखिलजनभयध्वंसकं काशिकायां लिंगं चोपास्त इत्यप्यधिकभसितरुद्राक्षसंभूषितः सन् ॥ जाबालेये बृहत्यप्यथ हरिजनिता श्रूयते सोम एकः पायाच्छ्रुत्यन्तसिद्धो जनिमृतिभयभृत्संसृतेस्तारको माम् ॥ ५५ ॥
मध्ये को वाऽधिकः स्याद्द्रुहिण हरिहराणामिति प्रश्नपूर्वं ब्रह्माद्यौ पैप्पलादं खलु वदति महान्रुद्र एवाधिकः स्यात् ॥ इत्युक्त्वा शारभाख्ये श्रुतिशिरसि नमश्चास्तु रुद्राय तस्मै स्तुत्वैवं ध्येयमाह त्रिपुरहरमुमाकांतमेकं

भजेऽहम् ॥ ५६ ॥
ध्याता रुद्रो रमेशो हरिरपि तु तथा ध्यानमेकः शिवस्तु
ध्येयोऽथर्वश्रुतेः सा निखिलरसवती या समाप्ता शिखा-
भूत् ॥ ध्येयश्चिन्मात्र एकः परमशिव इतो वा चिदं-
दशत्वमस्य ध्यातुः स्यान्न त्वमुष्य प्रकृतिभवमनोवृत्ति-
रूपस्य विष्णोः ॥ ५७ ॥
एको रुद्रो महेशः शिव इति च महादेव एवैष सर्व-
व्यापी यः श्रूयतेऽस्मिंच्छ्रुतिशिरसि तथाथर्वशीर्षाभिधे
च ॥ देवाः सर्वे यदन्तास्थितिजुष इह ते विष्णुपूर्वास्त-
तोन्यः को वाऽस्याद्व्यापकोऽस्मान्निरतिशयचिदा-
काशरूपान्महेशात् ॥ ५८ ॥
नाभौ ब्रह्माणमुक्त्वा हरिमपि हृदये रुद्रमेनं भ्रुवोस्त-
न्मध्ये श्रुत्यन्त एवं प्रणवविवरणे नारसिंहाभिधे च ॥
विज्ञेयः सोऽयमात्मा शिव इति च चतुर्थोऽद्वितीयः प्र-
शान्तश्चेत्याहान्ते प्रजेशस्त्रिदशपरिषदस्तत्स ईशः प्र-
पूज्यः ॥ ५९ ॥
कैवल्यं प्राप्नुयात्कः पुरुष इह शिवं केवलं त्वां विहाय
स्वामिन्नीशं तथान्यं जगति सदसतोरत्र विष्णोर्विधेर्वा ॥
चिन्मात्रः प्रत्यगात्मा त्वमसि खलु सदा पूर्व एक-
शिवोऽतस्त्वामेवैकं भजेऽहं सततमपि जगत्साक्षिणं नि-
र्विशेषम् ॥ ६० ॥
सूर्य उवाच ॥ एवं शिवस्य माहात्म्ये सर्वश्रुत्यन्तनिश्चिते ॥
उद्भवेत्संशयः कस्य को मुच्येत च संशयात् ॥ ६१ ॥
अतोरुण महाप्राज्ञ मुख्यान्तर्यामिणं मम ॥
त्रिनेत्रं भज कैवल्यसंसिध्यै परमेश्वरम् ॥ ६२ ॥
॥ इति सूर्यगीतायां तृतीयोऽध्यायः ॥ ३ ॥

सूर्य उवाच ॥ अथातः संप्रवक्ष्यामि तस्यान्तर्यामिणो गुरोः ॥
जगत्सृष्ट्यादिकर्माणि लीलारूपाणि सुव्रत ॥१॥
आदौ जगत्ससर्जेदं पंचीकरणकर्मणा ॥
यः स ईशो महामायः सर्वज्ञः सर्वशक्तिमान् ॥ २ ॥
चतुर्विधेषु भूतेषु निजमायावशीकृतान् ॥
जीवान् प्रवेशयित्वानुप्रविवेश स्वयं वशी ॥ ३ ॥
लीलारूपमपीदं च कर्म तस्य महेशितुः ॥
प्रारब्धकर्मजं ज्ञेयमाधिकारिकतावशात् ॥ ४ ॥
स ह्याधिकारिकः श्रेष्ठः पूर्वं जीवत्वमागतः ॥
समुच्चयादभूदीशो ज्ञानोपासनकर्मणाम् ॥ ५ ॥
प्राक्कल्पाधिकृतो देवः स्वारब्धक्षपणात्स्वयम् ॥
अपहाय निजां मायां प्राप्तवान् परमं पदम् ॥६॥
अथ तामाश्रितो जीवः कल्पादौ पूर्ववत्क्रमात् ॥
सृष्ट्वा सर्वाधिकारी सन् जगत्पाति च हन्ति च ॥७॥
क्रियमाणतया तेन नियमेनैव कर्मणाम् ॥
त्रयाणां तस्य कर्मित्वमीशस्याप्युपपद्यते ॥८॥
जीवन्मुक्तसमानत्वं यतस्तस्यावगम्यते ॥
अतः प्रारब्धकर्मित्वं अवश्यं तस्य सिध्यति ॥९॥
ब्रह्मवित्त्वं हि तस्य स्यान्न तु ब्रह्मत्वमीशितुः ॥
सृष्ट्यादिकर्मकर्तृत्वदर्शनान्माययाऽपि वा ॥१०॥
जीवसृष्ट्यादिकर्तृत्वं ब्रह्मणोऽपि तु वर्तते ॥
तथापि पूर्वकर्मित्वं तस्य न श्रूयते क्वचित् ॥११॥
कर्मणः प्रागभावत्वाद्भावत्वाद्ब्रह्मणो विभोः ॥
पूर्वकर्मवतो हि स्यात्कर्म प्रारब्धसंज्ञितम् ॥ १२ ॥
सृष्ट्यादिकर्मबद्धत्वे तस्य मायावशत्वतः ॥
वश्यमायत्ववचनं व्यर्थमेवेति चेन्न च ॥ १३ ॥

स्वाधिकारावसाने हि कैवल्यं नोपरुध्यते ॥
अतस्तस्य प्रसिद्धं तद्वश्यमायत्वमर्थवत् ॥ १४ ॥
स्थितौ तु तस्य मायित्वं कामित्वादिवदिष्यते ॥
न धनित्वादिवत्कर्म पारवश्यान्निरन्तरम् ॥ १५ ॥
जाग्रद्वत्सृष्टिकर्म स्यात्स्वप्नवत्स्थितिकर्म च ॥
जगत्प्रलयकर्म स्यात् सुप्तिवत्तस्य मायिनः ॥१६॥
अवस्थात्रयवत्त्वेन कर्मत्रितयवत्तया ॥
शरीरत्रयवत्त्वेन जीवः सोऽपीति केचन ॥ १७ ॥
तदयुक्तं पुरा जीवोऽप्यत्र ब्रह्मात्मवित्तया ॥
सर्वज्ञत्वादिसम्पत्त्या स हि जीवविलक्षणः ॥१८॥
जीवन्मुक्तसमानत्वान्न कर्मत्रयमीशितुः ॥
प्रारब्धमात्रबद्धत्वादधिकारवशादिह ॥१९॥
अधिकारावसाने तद्ब्रह्मत्वं सम्भविष्यति ॥
इति वेदान्तसिद्धेऽर्थे व्यभिचारः कुतो भवेत् ॥२०॥
ब्रह्मैवैकमकर्मोक्तं श्रुतिभिः स्मृतिभिश्च तत् ॥
ईशस्य कर्मतोक्तिस्तु श्रूयते ह्यौपचारिकी ॥२१॥
स कर्मत्वेऽपि तस्य स्यात्कर्ममोचकतेशितुः ॥
संचितागामिहीनत्वात्सर्वज्ञत्वाच्च सत्तम ॥२२॥
ईश्वरब्रह्मणोर्भेदं सकर्माऽकर्मतादिभिः ॥
सुप्रसिद्धमपह्नोतुं कः समर्थोऽस्ति मानतः ॥२३॥
ईश्वरस्याप्यकर्मत्वं यदि ब्रूयान्निरंकुशम् ॥
स द्वैती न कदाप्यस्मात्संसारान्मुक्तिमाप्नुयात् ॥२४॥
यतस्तत्पदवाच्योऽर्थः स हेय इति कथ्यते ॥
अतस्तस्य न नित्यत्वं नाकर्मत्वं च युज्यते॥२५॥
अनध्यस्तात्मभावेन न देहेनैव कश्चन ॥
व्यामीयेत ततश्च स्याद्देहीशो ध्यानसंयुतः ॥२६॥

स्वदेहेऽपीश्वरस्यास्ति नाध्यासः पारमार्थिकः ॥
प्रातिभासिकमाश्रित्य स्रष्टृत्वादि निगद्यते ॥२७॥
देहाध्यासस्य सत्यस्य न कदाप्यस्ति संगतिः ॥
प्रागीशदेहाभावेन देहाभावेन चाऽप्यये ॥ २८ ॥
जगत्प्रलयकाले स निर्व्यापारोऽपि सुप्तवत् ॥
अध्यासबीजवत्त्वेन पुनः सृष्टौ प्रवर्तते ॥ २९ ॥
चतुर्युगसहस्रान्ते विधातुर्हि निशोच्यते ॥
तदा सुप्तस्य तस्यापि जीवस्येव सबीजता ॥ ३० ॥
तथा विष्णोर्युगाः प्रोक्तास्तस्माच्छतगुणाधिकाः ॥
तथा शिवस्य तस्माच्च विष्णोः शतगुणाधिकाः ॥३१
एवं कालैरवच्छिन्नांस्तारतम्येन जीववत् ॥
ईश्वरांस्तान् कथं ब्रूयां देहकर्मादिवर्जितान् ॥३२॥
व्यष्टिदेहत्रयं स्वीयं मत्वा जीवत्रयं यथा ॥
पारमार्थिकसंसारनिबद्धं कर्मितामगात् ॥ ३३ ॥
समष्टिदेहत्रितयं तथा मत्वेश्वरत्रयम् ॥
प्रातिभासिकसंसारनिबद्धं कर्मितामगात् ॥ ३४ ॥
शुद्धसत्त्वप्रधानायां मायायां प्रतिबिंबितः ॥
ईश इत्युच्यते तस्य निरुपाधिकता कथम् ॥ ३५ ॥
औपाधिकस्य नित्यत्वं कथं वाच्यं मनीषिभिः ॥
अनित्यस्य च नैष्कर्म्यं कथं भवितुमर्हति ॥ ३६ ॥
ब्रह्मण्यारोपितो भ्रान्तैरीशाख्यः सर्वसृष्टिकृत् ॥
आत्मयोगिभिरभ्रान्तैः स भवत्यवरोपितः ॥ ३७ ॥
अविद्यातिमिरान्धस्य स्थाणौ चोरवदीश्वरः ॥
प्रतिभाति परब्रह्मण्यमले स्वात्मरूपिणि ॥ ३८ ॥
सद्यो मुमुक्षुदृष्ट्या हि नेश्वरस्यास्ति सत्यता ॥
अतो विवर्तवादोऽयं सुतरामुपयुज्यते ॥ ३९ ॥

परिणामेऽप्यनित्यत्वसंसिद्धेरीश्वरस्य च ॥
अद्वैतब्रह्मनिष्ठत्वं श्रोतुर्जीवस्य संभवेत् ॥ ४० ॥
अधिकारिविभेदेन वादास्ते च मतास्त्रयः ॥
तत्रोत्तमाधिकारी स्याच्छृण्वन्नीशे विवर्तताम् ॥४१॥
जीवे तु परिणामित्वं शृण्वन्नेवोत्तमोत्तमः ॥
कीटवद्भृंगरूपेण परिणामे विमोक्षतः ॥ ४२ ॥
जीवस्येश्वरताऽवाप्तौ क्रममुक्तिर्हि सिध्यति ॥
अतोऽस्य सद्यो मुक्त्यर्थं ब्रह्मतावाप्तिरीर्यते ॥ ४३॥
तुरीयः पंचमो वाऽऽस्तामीश्वरः षष्ठ एव वा ॥
तस्मादतीतं ब्रह्मेति सिद्धान्ते कोऽनुसंशयः ॥४४॥
ईश्वरे तिष्ठति ब्रह्म ब्रह्मणीशश्च तिष्ठति ॥
अत एकत्वमेव स्याद्द्वयोरिति न तर्क्यताम् ॥४५॥
ब्रह्मण्येवेश्वरः प्रोक्तो न तु ब्रह्मेश्वरे क्वचित् ॥
विभोरविभुसंस्थत्वासंभवात्परमात्मनः ॥ ४६ ॥
ब्रह्मक्षत्रमुभे यस्य श्रुत्या भवत ओदनः ॥
यस्योपसेचनं मृत्युः स यत्र ब्रह्मणीर्यते ॥ ४७ ॥
तदेतादृशमित्यत्र को वेददंतयाव्ययम् ॥
अखण्डं निर्गुणं ब्रह्म निराधारं परं महत् ॥ ४८ ॥
परब्रह्मांशभूतोऽपि परमः पुरुषोत्तमः ॥
ईश्वरादधिकः प्रोक्तः किं पुनर्ब्रह्म केवलम् ॥४९॥
कारणं जगतामीशो जीवानां ब्रह्म कारणम् ॥
एवं सतीशब्रह्मैक्यं व्यवहारे कथं भवेत् ॥५०॥
ईशस्य कर्मितायां हि पुण्यं पापं च संभवेत् ॥
सुखं दुःखं च तेनैव जीवत्वमिति चेच्छृणु ॥ ५१ ॥
ईशः प्रवर्तते पुण्यपापयोर्लोकसंग्रहात् ॥
तथाऽपि सुखदुःखे स्तो नैवात्मज्ञानवत्तया ॥५२॥

भ्रूणहत्यादिपापानि ह्यकरोद्विष्णुरीदृशः ॥
न तैर्दुःखमभूत्तस्य संप्राप्तं पारमार्थिकम् ॥५३॥
लोकक्षेमार्थकत्वेन तत्कृताघस्य निन्द्यता ॥
न वाच्या न च तेनास्ति जीवत्वं तस्य सर्वथा ॥५४॥
ऋगादिवेदकर्ताऽपि स यथोक्तं समाचरेत् ॥
अन्यथा संप्रसज्येत ह्यप्रामाणिकतेशितुः ॥ ५५ ॥
संसिद्धे शास्त्रकर्तृत्वे न कारयितृता वचः ॥
व्यर्थमेवेति चेन्नैष दोष एव विचारणे ॥ ५६ ॥
जीवस्य कर्तृतायां हि स्यात्कारयितृतेशितुः ॥
शास्त्रस्य कर्मतायां तु महेशस्यास्ति कर्तृता ॥५७॥
नैतेन शास्त्रयोनित्वं निर्गुणस्यैव हीयते ॥
निर्गुणोद्भूतशास्त्रस्य सगुणाद्व्यक्तिदर्शनात् ॥५८॥
उपचर्यत ईशस्य गुणिनः शास्त्रयोनिता ॥
यद्वाऽस्तामुभयोर्वेदवेदान्ताभ्यां च बीजता ॥ ५९ ॥
न चैतेनास्ति कर्मित्वसाम्यं ब्रह्मेशयोस्तयोः ॥
कर्तुश्च कृतकर्तुश्च भेदोऽस्ति स्पष्ट एव हि ॥ ६० ॥
कर्तृत्वं यस्य संसिद्धं कर्मित्वं तस्य सिद्ध्यति ॥
इत्यत्र संशयः को वा तद्ब्रह्मेशौ च कर्मिणौ ॥६१॥
इति चेत्कर्मितेशस्य कामित्वादिवदिष्यते ॥
ब्रह्मणोऽपि तु कर्मित्वं धनित्वादिवदित्यतः ॥६२॥
परतन्त्रो महेशः स्यात्स्वतन्त्रं ब्रह्म निर्गुणम् ॥
आधाराधेयभावेन कार्यकारणता द्वयोः ॥ ६३ ॥
कर्मित्वे ब्रह्मणः सिद्धे कथं नैर्गुण्यमीर्यते ॥
इति चेन्नैष दोषोऽस्ति मायागुणविवर्जनात् ॥ ६४ ॥
अदृश्यत्वादिभिर्विद्यागुणैरानन्दतादिभिः ॥
सगुणव्यपदेशः स्याद्ब्रह्मणस्त्विष्ट एव सः ॥ ६५ ॥

जगत्संसारकर्तृत्वं यथा जीवेशयोर्मतम् ॥
तथा जीवेशकर्तृत्वं परस्य ब्रह्मणो मतम् ॥ ६६ ॥
ब्रह्मणोऽन्यो न कर्ताऽस्ति प्राक्कर्मादिविवर्जनात् ॥
अनाद्यनन्तं ब्रह्मैकमकर्माकर्तृ हीर्यते ॥ ६७ ॥
कालत्रयेऽप्यकर्तृत्वं ब्रह्मणः सम्मतं यदि ॥
जीवेशरचना न स्यात् जगत्संसारयोरपि ॥ ६८ ॥
प्रत्यक्षसिद्धा रचना कर्तारं समपेक्षते ॥
अतोऽद्य कर्मकर्तृत्वाद्ब्रह्मणः कर्मितोचिता ॥ ६९ ॥
कार्मित्वे ब्रह्मणोऽप्येवं किं वाच्यं ब्रह्मवेदिनः ॥
ब्रह्मीभूतो न कर्मी स्यादित्येतच्च न सिद्ध्यति ॥७०॥
यादृशं ब्रह्म निर्णीतं तद्भूतोऽपि च तादृशः ॥
इति निर्णय एव स्याद्युक्तेरपि समंजसः ॥ ७१ ॥
कालत्रयेऽप्यकर्मित्वमकर्तृत्वमकालता ॥
कस्य चिद्ब्रह्मणोऽन्यस्य नीरूपस्यास्ति वस्तुनः ॥ ७२॥
तत्र कालत्रयातीतं नेह ज्ञेयं विवक्षितम् ॥
प्रमेयत्वप्रमाणत्वप्रमातृत्वादिवर्जनात् ॥ ७३ ॥
ये तु ब्रह्मेशजीवाः संप्रोक्ताः कर्तृत्वसंयुताः ॥
विद्यया मायया ते हि कर्मिणोऽविद्ययापि च ॥७४॥
कर्मिषु त्रिषु चोक्तेषु ब्रह्मणः श्रैष्ठ्यदर्शनात् ॥
अकर्मत्वं श्रुतिस्मृत्योः प्रोच्यते युक्तमेव तत् ॥ ७५ ॥
एतेन कार्मिणः श्रैष्ठ्यं संसिद्धमिति ये विदुः ॥
औदासीन्यं न तेषां स्याच्छुतिस्मृत्युक्तकर्मसु ॥ ७६॥
ज्ञानादुपास्तिरुत्कृष्टा कर्मोत्कृष्टमुपासनात् ॥
इति यो वेद वेदान्तैः स एव पुरुषोत्तमः ॥ ७७ ॥

इति सूर्यगीतायां चतुर्थोऽध्यायः ॥ ४ ॥

---

सूर्य उवाच ॥ अथातः संप्रवक्ष्यामि कर्मिश्रेष्ठस्य लक्षणम् ॥
यच्छ्रुत्वा नैव भूयोऽन्यच्छ्रोतव्यं तेऽवशिष्यते ॥ १ ॥
यस्य देहः स्वकीयोऽपि सर्वथा न प्रतीयते ॥
नेन्द्रियाणि च सर्वाणि स कर्मिश्रेष्ठ उच्यते ॥ २ ॥
यस्य प्राणाः प्रशान्ताः स्युर्मनआदीनि च स्वयम् ॥
अव्यक्तान्तानि सर्वाणि स कर्मिश्रेष्ठ उच्यते ॥३॥
वालोन्मत्तपिशाचादि चेष्टितान्यपि यत्र नो ॥
निष्ठाऽजगरवद्यस्य स कर्मिश्रेष्ठ उच्यते ॥ ४ ॥
नाहंभावश्च यस्यास्ति नेदंभावश्च कुत्रचित् ॥
सर्वद्वन्द्वविहीनात्मा स कर्मिश्रेष्ठ उच्यते ॥ ५ ॥
प्राग्बद्धोऽहं विमुक्तोऽद्येत्येवं यस्य स्मृतिर्न च ॥
नित्यमुक्तस्वरूपः सन् स कर्मिश्रेष्ठ उच्यते ॥ ६ ॥
विदेहमुक्तो यः प्रोक्तो वरिष्ठो ब्रह्मवेदिनाम् ॥
अरूपनष्टचित्तासुः स कर्मिश्रेष्ठ उच्यते ॥ ७ ॥
कर्माणि यस्य सर्वाणि वासनात्रयजानि च ॥
अभवन्नुपशान्तानि स कर्मिश्रेष्ठ उच्यते ॥ ८ ॥
कर्माणि कर्मभिः शुद्धैरशुद्धान्युपमृद्य यः ॥
स कर्मब्रह्ममात्रोऽभूत् स कर्मिश्रेष्ठ उच्यते ॥ ९ ॥
ज्ञानिनामपि य श्रेष्ठः सप्तमीं भूमिकां गतः ॥
उपासकानां यश्चैकः स कर्मिश्रेष्ठ उच्यते ॥ १० ॥
यः सर्वैः पीडितोऽपि स्यान्निर्विकारोऽपि पूजितः ॥
सुखदुःखे न यस्य स्तः स कर्मिश्रेष्ठ उच्यते ॥ ११ ॥
यः सर्वैर्मनुजैः पूज्यो यः सर्वैश्च सुरासुरैः ॥
ब्रह्मविष्णुशिवैर्यश्च स कर्मिश्रेष्ठ उच्यते ॥ १२ ॥
त्यक्त्वा कर्माणि सर्वाणि स्वात्ममात्रेण तिष्ठतः ॥
कथं कर्मित्वमित्येवं मा शंकिष्ठा महामते ॥१३॥

कर्मणां फलमेषा हि स्वात्ममात्रेण संस्थितिः ॥
अतः सफलकर्मैष कर्मिश्रेष्ठो भवेद्ध्रुवम् ॥१४॥
ज्ञानेन ज्ञायते यद्वा उपास्त्या चोपलभ्यते ॥
तत्स्थिरं प्राप्यतेऽनेन कर्मणाऽतोऽस्य कर्मिता ॥१५॥
देहेऽस्मिन् वर्तमानेऽपि देहस्मृतिविवर्जनात् ॥
विदेहमुक्त इत्युक्तः कथं कर्मीति चेच्छृणु ॥१६॥
देहविस्मृतिमत्त्वेऽपि कर्मदेहे स्थितत्वतः ॥
अन्यदृष्ट्याऽस्य देहित्वात्कर्मित्वमुपपद्यते ॥१७॥
देहस्थत्वादपूर्णः स्यादिति शंक्यं न किंचन ॥
तटाकमग्नकुंभस्थं जलं पूर्णं हि दृश्यते ॥१८॥
प्रारब्धकर्ममुक्तोऽपि भोगान्मुक्तोऽपि चाखिलात् ॥
कर्मकार्ये स्थितः कर्मी देहे स्याद्भोगसाधने ॥१९॥
साधने सति देहेऽपि साध्यो भोगो न सिद्ध्यति ॥
देहविस्मृतिमत्त्वेन देहहीनसमत्वतः ॥२०॥
आहिताग्नित्वसंसिद्ध्यै ज्योतिष्टोमे कृतेऽपि च ॥
यथा न स्वर्गमाप्नोति निष्कामः पुरुषर्षभः ॥२१॥
जाग्रत्स्वप्नसुषुप्त्यात्मसंधित्रयकृतामृतः ॥
सर्वसंध्यादिरहितः संधिभिर्वन्द्यते सदा ॥२२॥
यः सर्वकर्मभिर्वन्द्यो नित्यं सर्वैरकर्मिभिः ॥
स कर्मिप्रवरोऽकर्मिप्रवरश्चेति कथ्यते ॥ २३ ॥
सर्वसाम्यमुपेतस्य स्वात्मारामस्य योगिनः ॥
सहस्रशः कृतैः किं वा वन्दनैरकृतैश्च वा ॥२४॥
देहादिषु विकारेषु स्वीयत्वं स्वत्वपूर्वकम् ॥
विहाय नित्यनिष्ठाभिः स्वमात्रः स विराजते ॥२५॥
इन्द्रियार्थैर्विमूढानां दुष्कर्मत्वं निगद्यते ॥
तैरपेतः सुकर्म्येष विदेह इति कथ्यते ॥२६॥

यः सर्वद्वंद्वनिर्मुक्तः सर्वत्रिपुटिवार्जितः ॥
सर्वावस्थाविहीनः स विदेह इति कथ्यते ॥२७॥
लौकिकं वैदिकं कर्म सर्वं यस्मिन्क्षयं गतम् ॥
यस्मान्नैवाणुमात्रं च विदेह इति कथ्यते ॥२८॥
यस्येन्द्रियाणि सर्वाणि न चलन्ति कदाचन ॥
भित्तिस्थचित्रांगानीव विदेह इति कथ्यते ॥२९॥
आत्मानं सत्यमद्वैतं केवलं निर्गुणामृतम् ॥
संपश्यतः सदा स्वान्यविकारस्फुरणं कुतः ॥ ३० ॥
आत्मेतरदसत्यं च द्वैतं नानागुणान्वितम् ॥
अपश्यतः सदानन्दस्वरूपास्फुरणं कुतः ॥३१॥
आदिमध्यान्तरहितचिदानन्दस्वरूपिणः ॥
स्थितप्रज्ञस्य को बाधः शरीरेण स्वयोगिनः ॥३२॥
कर्माणि कर्मणा त्यक्त्वा ब्रह्मणा ब्रह्मणि स्थितः ॥
कर्मणा शर्म सततं संप्राप्तः स विराजते ॥३३॥
बुद्धेस्तैक्ष्ण्यं च मौढ्यं च यस्य नैवास्ति किंचन ॥
बुद्धेः पारंगतः सोऽयं प्रबुद्धः शोभतेतराम् ॥३४॥
मनस्तथैव संलीनं चितीव लवणं जले ॥
यथा निरन्तरात्मीयनिष्ठया सोऽद्वयोऽभवत् ॥३५॥
समनस्त्वान्महद्दुःखममनस्कस्य तत्कुतः ॥
समनस्को हि संकल्पान् कुरुते दुःखकारिणः ॥ ३६ ॥
प्रारब्धकर्मजं दुःखं जीवन्मुक्तस्य कथ्यते ॥
कर्मत्रयविहीनस्य विदेहस्य कथं नु तत् ॥ ३७ ॥
कर्म कर्तव्यमिति वा न कर्तव्यमितीह वा ॥
यदि मन्येत वैदेहीं न मुक्तिं प्राप्तवांस्तु सः॥३८॥
समाधिर्वाऽथ कर्तव्यो न कर्तव्य इतीह वा ॥
यदि मन्येत वैदेहीं न मुक्तिं प्राप्तवांस्तु सः ॥३९॥

पूर्वं बद्धोऽधुना मुक्तोऽस्म्यहमित्येव बन्धनात् ॥
यदि मन्येत वैदेहीं न मुक्तिं प्राप्तवांस्तु सः ॥४०॥
पूर्वमप्यभवन्मुक्तो मध्ये भ्रान्तिस्तु बन्धवत् ॥
यदि मन्येत वैदेहीं न मुक्तिं प्राप्तवांस्तु सः ॥४१॥
वन्ध्यापुत्रादिवत्सर्वं मय्यभूदसादित्यपि ॥
यदि मन्येत वैदेहीं न मुक्तिं प्राप्तवांस्तु सः ॥४२॥
आविद्यकं तमो ध्वस्तं स्वप्रकाशेन वा इति ॥
यदि मन्येत वैदेहीं न मुक्तिं प्राप्तवांस्तु सः॥४३॥
स्वप्नेऽपि नाहंभावोऽस्ति मम देहेन्द्रियादिषु ॥
यदि मन्येत वैदेहीं न मुक्तिं प्राप्तवांस्तु सः ॥४४॥
अरूपनष्टमनसो विदेहत्वं प्रकीर्त्यते ॥
तत्कथं मन्यमानस्य यत्किंचित्स्यादनात्मनः ॥४५॥
मनो नश्यति निःशेषं मननस्य विसर्जनात् ॥
अमनस्कस्वभावं तत्पदं तस्यावशिष्यते ॥ ४६ ॥
मननेन विनिश्चित्य वैदेहीं मुक्तिमात्मनः ॥
नैष्कर्म्यसिद्धिं वदतां का तृप्तिराविवेकिनाम् ॥४७॥
श्रुत्वा वेदान्तवाक्यानि मोदन्तेऽनुभवं विना ॥
लीढेन ताडपत्रेण गुडाक्षरयुतेन किम् ॥ ४८ ॥
स्वानुभूतिं विना शास्त्रैः पंडिताः समलंकृताः ॥
कचहीनेव विधवा भूषणैर्भूषितोत्तमैः ॥ ४९॥
स्वानुभूतिं विना कर्माण्याचरन्त्यखिलान्यपि ॥
स्वर्णायःकुम्भकारादितुल्या एवोपवीतिनः ॥ ५० ॥
स्वानुभूतिं विना वेदान् पठन्ति विविधा द्विजाः ॥
प्रावृण्णिशायां परितो मण्डूका इव दुस्स्वराः ॥५१॥
स्वानुभूतिं विना देहं बिभ्रत्यध्यासदार्ढ्यतः ॥
शाकल्यस्य मृतं देहं धनबुद्ध्येव तस्कराः ॥५२॥

स्वानुभूतिं विना ध्यानं कुर्वन्त्यासनसंयुताः ॥
बका इवांभसस्तीरे मत्स्यवंचनतत्पराः ॥५३ ॥
स्वानुभूतिं विना श्वासान्निरुन्धन्ति हठात्सदा ॥
अयस्कारोऽनिलं वाह्यं द्रुतिकायामिवाधिकम् ॥ ५४ ॥
स्वानुभूतिं विना योगदण्डपट्टादिधारिणः ॥
जीर्णकन्थाभरं भग्नदंडभांडादि पित्तवत् ॥ ५५ ॥
स्वानुभूतिं विना यद्यत्कुर्वन्ति भुवि मानवाः ॥
तत्तत्सर्वं वृथैव स्यान्मरुभूमौ कृषिर्यथा ॥ ५६ ॥
स्वानुभूत्यर्थकं कर्म निकृष्टमपि सर्वथा ॥
उत्तमं विबुधैः श्लाघ्यं श्वेव चोरनिवर्तकः ॥ ५७ ॥
स्वानुभूत्युपयुक्तेभ्य इतराणि बहून्यपि ॥
कर्मादीन्याचरन्मर्त्यो भ्रान्तवद्व्यर्थचेष्टितः ॥५८॥
श्रुतिस्मृतिपुराणेषु काम्यकर्माण्यनेकधा ॥
प्रोच्यन्ते तेषु संसक्तस्त्याज्यः शिष्टैर्विटो यथा ॥५९॥
काम्यकर्मसमासक्तः स्वनिष्ठां स्वस्य मन्यते ॥
जात्यन्धः स्वस्य रत्नादिपरीक्षादक्षतामिव ॥६०॥
अवशेन्द्रियमात्मार्थगुरुबुद्ध्यैव सेवते ॥
बालातन्तुसुतं लोकेऽगणितं मुक्तये यथा ॥ ६१ ॥
यस्तु वश्येन्द्रियं शान्तं निष्कामं सद्गुरुं सदा ॥
स्वात्मैकरासिकं मुक्त्यै स धीमानुपगच्छति ॥ ६२ ॥
काम्यकर्माणि चोत्सृज्य निष्कामो यो मुमुक्षया ॥
शान्त्यादिगुणसंयुक्तं गुरुं प्राप्तः स मुच्यते ॥ ६३ ॥
इति श्रुत्वाऽरुणः सूर्यात्संतुष्टः स्वात्मनिष्ठया ॥
कृतकृत्य इदं प्राह भास्करं विनयान्वितः ॥ ६४ ॥
अरुण उवाच ॥ श्रीमन्गुरुवर स्वामिंस्त्वन्मुखात्पारमार्थिकम् ॥
निष्कामकर्ममाहात्म्यं श्रुत्वा धन्योऽस्म्यसंशयम् ॥ ६५ ॥

सकर्मत्वसकर्मत्वं विदेहस्य च लक्षणम् ॥
श्रुतं रहस्यं नातोऽन्यत्किंचिदप्यवशिष्यते ॥ ६६ ॥
तथाऽपि मम साक्षात्त्वं कर्तव्यं ब्रूहि निश्चितम् ॥
मच्चित्तपरिपाकं हि वेत्सि सर्वज्ञ सद्गुरो ॥ ६७ ॥
इति पृष्ट उवाचेदं भगवान्भास्करोऽरुणम् ॥
स्वसारथिं निजाग्रस्थं बद्धबाहुं नताननम् ॥ ६८ ॥
सूर्य उवाच ॥ अरुण त्वं परं ब्रह्म साक्षाद्दृष्ट्वाऽधुना कृती ॥
तथाऽप्यादेहपतनाद्ब्रह्माभिध्यानमादरात् ॥ ६९ ॥
स्वाधिकारोचितं शुद्धं कर्माप्याचर सत्तम ॥
प्रमादो माऽस्तु ते स्वप्नेऽप्युक्तयोर्ब्रह्मकर्मणोः ॥ ७० ॥
संवादमावयोरेतं सर्वपापहरं शुभम् ॥
यः शृणोति सकृद्वा स कृतार्थो नात्र संशयः ॥ ७१ ॥
श्रीगुरुमूर्तिरुवाच ॥ इति दिनकरवक्त्राद्ब्रह्मकर्मैनिष्ठां स्फुटतर-
मवगम्य प्राज्ञ एकोऽरुणः सः ॥ अभवदखिललोकैः
पूजनीयः कृतार्थस्त्वमपि भव तथैव क्षिप्रमंभोजजन्मन् ७२
विमलविगुणयोगाभ्यासदार्ढ्येन युक्तः सकलगतचिदा-
त्मन्यद्वितीये बुधोऽपि ॥ सततमपि कुरुष्वारब्धदुःखो-
पशान्त्यै रहसि निजसमाधीन्स्वोक्तकर्मापि धातः ७३

इति तत्त्वसारायणकर्मकाण्डोक्तश्रीसूर्यगीतायां पंचमोऽध्यायः ॥ ५ ॥

---

॥ इति सूर्यगीता समाप्ता ॥

## ॥ अथ प्रारभ्यते विष्णुपुराणान्तर्गता यमगीता ॥

मैत्रेय उवाच ॥ यथावत्कथितं सर्वं यत्पृष्टोऽसि मया द्विज ॥
श्रोतुमिच्छाम्यहं त्वेकं तद्भवान्प्रब्रवीतु मे ॥ १ ॥
सप्तद्वीपानि पातालवीथ्यश्च सुमहामुने ॥
सप्त लोका येऽन्तरस्था ब्रह्मांडस्यास्य सर्वतः ॥ २ ॥
स्थूलैः सूक्ष्मैस्तथा स्थूलसूक्ष्मैः सूक्ष्मतरैस्तथा ॥
स्थूलास्थूलतरैश्चैतत्सर्वं प्राणिभिरावृतम् ॥ ३ ॥
अंगुलस्याष्टभागोऽपि न सोऽस्ति मुनिसत्तम ॥
न सन्ति प्राणिनो यत्र कर्मबंधनिबंधनाः ॥ ४ ॥
सर्वे चैते वशं यान्ति यमस्य भगवन्किल ॥
आयुषोऽन्तेन ते यान्ति यातनास्तत्प्रचोदिताः ॥ ५ ॥
यातनाभ्यः परिभ्रष्टा देवाद्यास्वथ योनिषु ॥
जन्तवः परिवर्तन्ते शास्त्राणामेष निर्णयः ॥ ६ ॥
सोऽहमिच्छामि तच्छ्रोतुं यमस्य वशवर्तिनः ॥
न भवन्ति नरा येन तत्कर्म कथयामलम् ॥ ७ ॥
पराशर उवाच ॥ अयमेव मुने प्रश्नो नकुलेन महात्मना ॥
पृष्टः पितामहः प्राह भीष्मो यत्तच्छृणुष्व मे ॥ ८ ॥
भीष्म उवाच ॥ पुरा ममागतो वत्स सखा कालिंगको द्विजः
स मामुवाच पृष्टो वै मया जातिस्मरो मुनिः ॥ ९ ॥
तेनाख्यातमिदं चेदमित्थं चैतद्भविष्यति ॥
तथा च तदभूद्वत्स यथोक्तं तेन धीमता ॥ १० ॥
स पृष्टश्च मया भूयः श्रद्दधानवता द्विजः ॥
यद्यदाह न तद्दृष्टमन्यथा हि मया क्वचित् ॥ ११ ॥
एकदा तु मया पृष्टं यदेतद्भवतोदितम् ॥

प्राह कालिंगको विप्रः स्मृत्वा तस्य मुनेर्वचः ॥१२॥
जातिस्मरेण कथितो रहस्यः परमो मम ॥
यमकिंकरयोर्योऽभूत्संवादस्तं ब्रवीमि ते ॥१३॥
कालिंग उवाच ॥ स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल
तस्य कर्णमूले ॥ परिहर मधुसूदनं प्रपन्नान्प्रभुरहमस्मि
नृणां न वैष्णवानाम् ॥ १४ ॥
अहममरगणार्चितेन धात्रा यम इति लोकहिताहिते
नियुक्तः ॥ हरिगुरुवशगोऽस्मि न स्वतंत्रः प्रभवति
संयमने ममापि विष्णुः ॥ १५ ॥
कटकमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथै-
कम् ॥ सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्यते
तथैकः ॥ १६ ॥
क्षितिजलपरमाणवोऽनिलान्ते पुनरपि यान्ति यथैकतां
धरित्र्या ॥ सुरपशुमनुजादयस्तथान्ते गुणकलुषेण
सनातनेन तेन ॥ १७ ॥
हरिममरगणार्चितांघ्रिपद्मं प्रणमति यः परमार्थतो हि
मर्त्यः ॥ तमथ गतसमस्तपापबंधं व्रज परिहृत्य यथा-
ग्निमाज्यसिक्तम् ॥ १८ ॥
इति यमवचनं निशम्य पाशी यमपुरुषस्तमुवाच
धर्मराजम् ॥ कथय मम विभोः समस्तधातुर्भवति
हरेः खलु यादृशोऽस्य भक्तः ॥ १९ ॥
यम उवाच ॥ न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृ-
द्विपक्षपक्षे ॥ न हरति न च हन्ति किंचिदुच्चैः सितमनसं
तमवेहि विष्णुभक्तम् ॥ २० ॥
कलिकलुषमलेन यस्य नात्मा विमलमतेर्मलिनीकृतोऽस्त-
मोहे ॥ मनसि कृतजनार्दनं मनुष्यं सततमवेहि हरेः

तीव्रभक्तम् ॥ २१ ॥
कनकमपि रहस्यवेक्ष्य बुद्ध्या तृणमिव यः समवैति वै परस्वम् ॥ भवति च भगवत्यनन्यचेताः पुरुषवरं तमवेहि विष्णुभक्तम् ॥ २२ ॥
स्फटिकगिरिशिलामलः क्व विष्णुर्मनसि नृणां क्व च मत्सरादिदोषः ॥ न हि तुहिनमयूखरश्मिपुंजे भवति हुताशनदीप्तिजः प्रतापः ॥ २३ ॥
विमलमतिविमत्सरः प्रशान्तः शुचिचरितोऽखिलसत्त्वमित्रभूतः ॥ प्रियहितवचनोऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः ॥ २४ ॥
वसति हृदि सनातने च तस्मिन्भवति पुमाञ्जगतोऽस्य सौम्यरूपः ॥ क्षितिरसमतिरम्यमात्मनोऽन्तः कथयति चारुतयैव शालपोतः ॥ २५ ॥
यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् ॥ अपगतमदमानमत्सराणां व्रज भट दूरतरेण मानवानाम् ॥ २६ ॥
हृदि यदि भगवाननादिरास्ते हरिरसिशंखगदाधरोऽव्ययात्मा ॥ तदघमघविघातकर्तृभिन्नं भवति कथं सति वान्धकारमर्के ॥ २७ ॥
हरति परधनं निहान्ति जन्तून्वदति तथानिशनिष्ठुराणि यश्च ॥ अशुभजनितदुर्मदस्य पुंसः कलुषमतेर्हृदि तस्य नास्त्यनंतः ॥ २८ ॥
न सहति परमं पदं विनिन्दां कलुषमतिः कुरुते सतामसाधुः॥ न यजति न ददाति यश्च सन्तं मनसि न तस्य जनार्दनोऽधमस्य ॥ २९ ॥
परमसुहृदि बांधवे कलत्रे सुततनयापितृमातृभृत्यवर्गे ॥

शठमतिरुपयाति योऽर्थतृष्णां तमधमचेष्टमवेहि नास्य
भक्तम् ॥ ३० ॥
अशुभमतिरसत्प्रवृत्तिसक्तः सततमनार्यविशालसंगमत्तः॥
अनुदिनकृतपापबंधयत्नः पुरुषपशुर्न हि वासुदेवभक्तः
सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरः स एकः॥
इति मतिरमला भवत्यनन्ते हृदयगते व्रज तान्विहाय
दूरात् ॥ ३२ ॥
कमलनयन वासुदेव विष्णो धरणिधराच्युत शंखचक्र-
पाणे ॥ भव शरणमितीरयन्ति ये वै त्यज भट
दूरतरेण तानपापान् ॥ ३३ ॥
वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य न
तस्य दृष्टिपाते ॥ तव गतिरथवा ममास्ति चक्रप्रतिह-
तवीर्यबलस्य सोऽन्यलोक्यः ॥ ३४ ॥
कालिंग उवाच ॥ इति निजभटशासनाय देवो रवितनयः स
किलाह धर्मराजः ॥ मम कथितमिदं च तेन तुभ्यं
कुरुवर सम्यगिदं मयापि चोक्तम् ॥ ३५ ॥
भीष्म उवाच ॥ नकुलैतन्ममाख्यातं पूर्वं तेन द्विजन्मना ॥
कलिंगदेशादभ्येत्य भीयता सुमहात्मना ॥३६॥
मयाप्येतद्यथान्यायं सम्यग्वत्स तवोदितम् ॥
यथा विष्णुमृते नान्यत्त्राणं संसारसागरे ॥३७॥
किंकरा दंडपाशौ वा न यमो न च यातनाः ॥
समर्थास्तस्य यस्यात्मा केशवालंबनः सदा ॥३८॥
पराशर उवाच ॥ एतन्मुने तवाख्यातं गीतं वैवस्वतेन यत्॥
त्वत्प्रश्नानुगतं सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥३९॥
॥ इति यमगीता समाप्ता ॥

---

## ॥ अथ प्रारभ्यते नृसिंहपुराणान्तर्गता यमगीता ॥

व्यास उवाच ॥ मृत्युश्च किंकराश्चैव विष्णुदूतैः प्रपीडिताः ॥
स्वराज्ञस्तेऽनुनिर्वेशं गत्वा संचुक्रुशुर्भृशम् ॥ १॥
मृत्युकिंकरा ऊचुः ॥ शृणु राजन्वचोऽस्माकं तवाग्रे यद्ब्रवी-
महे ॥ त्वदादेशाद्वयं गत्वा मृत्युं संस्थाप्य दूरतः॥२॥
ब्राह्मणस्य समीपं च भृगोः पौत्रस्य सत्तमः ॥
तं ध्यायमानं कमपि देवमेवाग्रमानसम् ॥ ३ ॥
गन्तुं न शक्तास्तत्पार्श्वं वयं सर्वे महामते ॥
यावत्तावन्महाकायैः पुरुषैर्मुशलैर्हताः ॥ ४ ॥
वयं निवृत्तास्तद्वीक्ष्य मृत्युस्तत्र गतः पुनः ॥
अस्मान्निर्भर्त्स्य तत्रायं तैर्नरैर्मुशलैर्हतः ॥ ५॥
एवमत्र तमानेतुं ब्राह्मणं तपसि स्थितम् ॥
अशक्ता वयमेवात्र मृत्युना सह वै प्रभो ॥ ६ ॥
तद्ब्रवीमि महाभाग यद्ब्रह्म ब्राह्मणस्य तु ॥
देवं कं ध्यायते विप्रः के वा ते यैर्हता वयम् ॥ ७ ॥
व्यास उवाच ॥ इत्युक्तः किंकरैः सर्वैर्मृत्युना च महामते ॥
ध्यात्वा क्षणं महाबुद्धिः प्राह वैवस्वतो यमः ॥ ८ ॥
यम उवाच ॥ शृण्वन्तु किंकराः सर्वे मृत्युश्चान्ये च मे वचः ॥
सत्यमेतत्प्रवक्ष्यामि ज्ञानं यद्योगमार्गतः ॥ ९ ॥
भृगोः पौत्रो महाभागो मार्कंडेयो महामतिः ॥
स ज्ञात्वाद्यात्मनः कालं गतो मृत्युजिगीषया ॥१०॥
भृगुणोक्तेन मार्गेण स तेपे परमं तपः ॥
हरिमाराध्य मेधावी जपन्वै द्वादशाक्षरम् ॥ ११ ॥
एकाग्रेणैव मनसा ध्यायते हृदि केशवम् ॥

सततं योगयुक्तस्तु स मुनिस्तत्र किंकराः ॥ १२ ॥
हरिध्यानमहादक्षा बलं तस्य महामुनेः ॥
नान्यद्वै प्राप्तकालस्य बलं पश्यामि किंकराः ॥ १३ ॥
हृदिस्थे पुंडरीकाक्षे सततं भक्तवत्सले ॥
पश्यन्तं विष्णुभूतं नु को हि स्यात्केशवाश्रयम् ॥१४॥
तेऽपि वै पुरुषा विष्णोर्यैर्यूयं ताडिता भृशम् ॥
अत ऊर्ध्वं न गन्तव्यं यत्र वै वैष्णवाः स्थिताः ॥१५॥
न चित्रं ताडनं तत्र अहं मन्ये महात्मभिः ॥
भवतां जीवनं चित्रं यक्षैर्दत्तं कृपालुभिः ॥ १६ ॥
नारायणपरं विप्रं कस्तं वीक्षितुमुत्सहेत् ॥
युष्माभिश्च महापापैर्मार्कंडेयं हरिप्रियम् ॥
समानेतुं कृतो यत्नः समीचीनं न तत्कृतम् ॥ १७॥
नरसिंहं महादेवं ये नराः पर्युपासते ॥
तेषां पार्श्वं न गन्तव्यं युष्माभिर्मम शासनात् ॥१८॥
व्यास उवाच ॥ स एवं किंकरानुक्त्वा मृत्युं च पुरतः स्थितम्॥
यमो निरीक्ष्य च जनं नरकस्थं प्रपीडितम् ॥१९॥
कृपया परया युक्तो विष्णुभक्त्या विशेषतः ॥
जनस्यानुग्रहार्थाय तेनोक्ता वागिरः शृणु ॥ २० ॥
नरके पच्यमानस्य यमेन परिभाषितम् ॥
किं त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥२१॥
उदकेनाप्यलाभे तु द्रव्याणां पूजितः प्रभुः ॥
यो ददाति स्वकं लोकं स त्वया किं न पूजितः ॥२२॥
नरसिंहो हृषीकेशः पुंडरीकनिभेक्षणः ॥
स्मरणान्मुक्तिदो नृणां स त्वया किं न पूजितः ॥२३॥
इत्युक्त्वा नारकान्सर्वान्पुनराह स किंकरान् ॥
वैवस्वतो यमः साक्षाद्विष्णुभक्तिसमन्वितः ॥ २४ ॥

नारदाय स विश्वात्मा प्राहैवं विष्णुरव्ययः ॥
अन्येभ्यो वैष्णवेभ्यश्च सिद्धेभ्यः सततं श्रुतम् ॥२५॥
तद्वः प्रीत्या प्रवक्ष्यामि हरिवाक्यमनुत्तमम् ॥
शिक्षार्थं किंकराः सर्वे शृणुत प्रणता हरेः ॥ २६ ॥
हे कृष्ण कृष्ण कृष्णेति यो मां स्मरति नित्यशः ॥
जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् ॥ २७ ॥
पुंडरीकाक्ष देवेश नरसिंह त्रिविक्रम ॥
त्वामहं शरणं प्राप्त इति यस्तं समुद्धर ॥ २८ ॥
त्वां प्रपन्नोऽस्मि शरणं देवदेव जनार्दन ॥
इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहम् ॥ २९ ॥
व्यास उवाच ॥ इत्युदीरितमाकर्ण्य हरिवाक्यं यमेन च ॥
नारकाः कृष्ण कृष्णेति नारसिंहेति चुक्रुशुः ॥ ३०
यथा यथा हरेर्नाम कीर्तयन्त्यत्र नारकाः ॥
तथा तथा हरेर्भक्तिमुद्वहन्तोऽब्रुवन्निदम् ॥ ३१ ॥
नारका ऊचुः ॥ नमो भगवते तस्मै केशवाय महात्मने ॥
यन्नामकीर्तनात्सद्यो नरकाग्निः प्रशाम्यति ॥ ३२ ॥
भक्तप्रियाय देवाय रक्षाय हरये नमः ॥
लोकनाथाय शान्ताय यज्ञेशायादिमूर्तये ॥ ३३ ॥
अनन्तायाप्रमेयाय नरसिंहाय ते नमः ॥
नारायणाय गुरवे शंखचक्रगदाभृते ॥ ३४ ॥
वेदप्रियाय महते विक्रमाय नमो नमः ॥
वाराहायाप्रतर्क्याय वेदांगाय महीभृते ॥ ३५ ॥
नमो द्युतिमते नित्यं ब्राह्मणाय नमो नमः ॥
वामनाय बहुज्ञाय वेदवेदांगधारिणे ॥ ३६ ॥
बलिबंधनदत्ताय वेदपालाय ते नमः ॥
विष्णवे सुरनाथाय व्यापिने परमात्मने ॥ ३७ ॥

चतुर्भुजाय शुद्धाय शुद्धद्रव्याय ते नमः ॥
जामदग्न्याय रामाय दुष्टक्षत्रान्तकारिणे ॥ ३८ ॥
रामाय रावणान्ताय नमस्तुभ्यं महात्मने ॥
अस्मानुद्धर गोविन्द पूतिगन्धान्नमोऽस्तु ते ॥ ३९ ॥

इति नृसिंहपुराणे यमगीताध्यायः ॥

---

॥ इति यमगीता समाप्ता ॥



## ॥ अथ प्रारभ्यते अग्निपुराणान्तर्गता यमगीता ॥

अग्निरुवाच ॥ यमगीतां प्रवक्ष्यामि उक्ता या नाचिकेतसे ॥
पठतां शृण्वतां भुक्त्यै मुक्त्यै मोक्षार्थिनां सताम् ॥१॥
यम उवाच ॥ आसनं शयनं यानपरिधानगृहादिकम् ॥
वांछत्यहोऽतिमोहेन सुस्थिरं स्वयमास्थिरः ॥२॥
भोगेषु शक्तिः सततं तथैवात्मावलोकनम् ॥
श्रेयः परं मनुष्याणां कपिलोद्गीतमेव हि ॥ ३ ॥
सर्वत्र समदर्शित्वं निर्ममत्वमसंगता ॥
श्रेयः परं मनुष्याणां गीतं पंचशिखेन हि ॥४॥
आगर्भजन्मबाल्यादिवयोऽवस्थादिवेदनम् ॥
श्रेयः परं मनुष्याणां गंगाविष्णुप्रगीतकम् ॥५॥
आध्यात्मिकादिदुःखानामाद्यन्तादिप्रतिक्रिया ॥
श्रेयः परं मनुष्याणां जनकोद्गीतमेव च ॥६॥
अभिन्नयोर्भेदकरः प्रत्ययो यः परात्मनः ॥
तच्छांतिपरमं श्रेयो ब्रह्मोद्गीतमुदाहृतम् ॥७॥
कर्तव्यमिति यत्कर्म ऋग्यजुःसामसंज्ञितम् ॥
कुरुते श्रेयसे संगान् जैगीषव्येण गीयते ॥८ ॥
हानिः सर्वविधित्सानामात्मनः सुखहेतुकी ॥
श्रेयः परं मनुष्याणां देवलोद्गीतमीरितम् ॥ ९ ॥
कामत्यागात्तु विज्ञानं सुखं ब्रह्मपरं पदम् ॥
कामिनां न हि विज्ञानं सनकोद्गीतमेव तत् ॥१०॥
प्रवृत्तं च निवृत्तं च कार्यं कर्मपरोऽब्रवीत् ॥
श्रेयसा श्रेय एतद्धि नैष्कर्म्यं ब्रह्म तद्धरिः ॥ ११ ॥
पुमांश्चाधिगतज्ञानो भेदं नाप्नोति सत्तमः ॥

ब्रह्मणा विष्णुसंज्ञेन परमेणाव्ययेन च ॥ १२ ॥
ज्ञानं विज्ञानमास्तिक्यं सौभाग्यं रूपमुत्तमम् ॥
तपसा लक्ष्यते सर्वं मनसा यद्यदिच्छति ॥ १३ ॥
नास्ति विष्णुसमं ध्येयं तपो नानशनात्परम् ॥
नास्त्यारोग्यसमं धन्यं नास्ति गंगासमा सरित् ॥१४॥
न सोऽस्ति बांधवः कश्चिद्विष्णुं मुक्त्वा जगद्गुरुम् ॥
अधश्चोर्ध्वं हरिश्चाग्रे देहेंद्रियमनोमुखे ॥ १५ ॥
इत्येव संस्मरन्प्राणान्यस्त्यजेत्स हरिर्भवेत् ॥
यत्तद्ब्रह्म यतः सर्वं यत्सर्वं तस्य संस्थितम् ॥ १६ ॥
अग्राह्यकमनिर्देश्यं सुप्रतीकं च यत्परम् ॥
परापरस्वरूपेण विष्णुः सर्वहृदि स्थितः ॥ १७ ॥
यज्ञेशं यज्ञपुरुषं केचिदिच्छन्ति तत्परम् ॥
केचिद्विष्णुं हरं केचित्केचिद्ब्रह्माणमीश्वरम् ॥ १८ ॥
इंद्रादिनामभिः केचित्सूर्यं सोमं च कालकम् ॥
ब्रह्मादिस्तंबपर्यन्तं जगद्विष्णुं वदन्ति च ॥ १९ ॥
स विष्णुः परमं ब्रह्म-यतो नावर्तते पुनः ॥
सुवर्णादिमहादानपुण्यतीर्थावगाहनैः ॥ २० ॥
ध्यानैर्व्रतैः पूजया च धर्मश्रुत्या तदाप्नुयात् ॥
आत्मानं रथिनं विद्धि शरीरं रथमेव तु ॥ २१ ॥
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इंद्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ॥२२॥
आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥
यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा ॥२३॥
न तत्पदमवाप्नोति संसारं चाधिगच्छति ॥
यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा ॥२४॥
स तत्पदमवाप्नोति यस्माद्भूयो न जायते ॥

विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः ॥२५॥
सोऽध्वानं परमाप्नोति तद्विष्णोः परमं पदम् ॥
इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ॥२६॥
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥२७॥
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ॥
एषु सर्वेषु भूतेषु गूढात्मा न प्रकाशते ॥२८॥
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥
यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेज्ज्ञानमात्मनि ॥२९॥
ज्ञानमात्मनि महति नियच्छेच्छान्त आत्मनि ॥
ज्ञात्वा ब्रह्मात्मनोर्योगं यमाद्यैर्ब्रह्म सद्भवेत् ॥३०॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ॥
यमाश्च नियमाः पंच शौचं संतोषसत्तमः ॥३१॥
स्वाध्यायेश्वरपूजा च आसनं पद्मकादिकम् ॥
प्राणायामो वायुजयः प्रत्याहारः स्वनिग्रहः ॥३२॥
शुभे ह्येकत्र विषये चेतसो यत्प्रधारणम् ॥
निश्चलत्वात्तु धीमद्भिर्धारणा द्विज कथ्यते ॥३३॥
पौनःपुन्येन तत्रैव विषयेष्वेव धारणा ॥
ध्यानं स्मृतं समाधिस्तु अहंब्रह्मात्मसंस्थितिः ॥३४॥
घटध्वंसाद्यथाकाशमभिन्नं नभसा भवेत् ॥
मुक्तो जीवो ब्रह्मणैवं सद्ब्रह्म ब्रह्म वै भवेत् ॥३५॥
आत्मानं मन्यते ब्रह्म जीवो ज्ञानेन नान्यथा ॥
जीवो ह्यज्ञानतत्कार्यमुक्तः स्यादजरामरः ॥३६॥
अग्निरुवाच ॥ वासिष्ठ यमगीतोक्ता पठतां भुक्तिमुक्तिदा ॥
आत्यन्तिको लयः प्रोक्तो वेदान्तब्रह्मधीमयः ॥३७॥

॥ इति यमगीता समाप्ता ॥

## ॥ अथ प्रारभ्यते श्रीमद्भागवतान्तर्गता हंसगीता ॥

उद्धव उवाच ॥ यदा त्वं सनकादिभ्यो येन रूपेण केशव ॥
योगमादिष्टवानेतद्रूपमिच्छामि वेदितुम् ॥ १ ॥
श्रीभगवानुवाच॥ पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः॥
पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीं गतिम् ॥ २॥
सनकादय ऊचुः ॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो॥
कथमन्योन्यसंत्यागो मुमुक्षोरतितितीर्षोः ॥ ३ ॥
श्रीभगवानुवाच ॥ एवं पृष्टो महादेवः स्वयंभूर्भूतभावनः ॥
ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥ ४ ॥
स मामचिंतयद्देवः प्रश्नपारतितीर्षया ॥
तस्याहं हंसरूपेण सकाशमगमं तदा ॥ ५ ॥
दृष्ट्वा मां त उपव्रज्य कृत्वा पादाभिवंदनम् ॥
ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥ ६ ॥
इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा ॥
यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ॥ ७ ॥
वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः ॥
कथं घटेत वो विप्रा वक्तुर्वा मे क आश्रयः ॥ ८॥
पंचात्मकेषु भूतेषु समानेषु च वस्तुतः ॥
को भवानिति वः प्रश्नो वाचारंभो ह्यनर्थकः ॥ ९ ॥
मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपींद्रियैः ॥
अहमेव न मत्तोऽन्यदिति बुध्यध्वमंजसा ॥ १० ॥
गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ॥
जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ ११ ॥
गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया ॥

गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥ १२ ॥
जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ॥
तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥१३॥
यर्हि संसृतिबंधोऽयमात्मनो गुणवृत्तिदः ॥
मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसाम् ॥ १४ ॥
अहंकारकृतं बंधमात्मनोऽर्थविपर्ययम् ॥
विद्वान्निर्विंद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत् ॥ १५ ॥
यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ॥
जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥ १६ ॥
असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ॥
गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ १७ ॥
यो जागरे बहिरनुक्षणधर्मिणोऽर्थान् भुंक्ते समस्तकरणै-
र्हृदि तत्सदृक्षान् ॥ स्वप्ने सुषुप्त उपसंहरते स एकः
स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिंद्रियेशः ॥ १८ ॥
एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि
कृता इति निश्चितार्थाः ॥ संछिद्य हार्दमनुमानसदु-
क्तितीक्ष्णज्ञानासिना भजत माखिलसंशयाधिम् ॥१९॥
ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलम-
लातचक्रम् ॥ विज्ञानमेकमुरुधेव विभाति माया स्वप्न-
स्त्रिधा गुणविसर्गकृतो विकल्पः ॥ २० ॥
दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवे निजसु-
खानुभवो निरीहः ॥ संदृश्यते क्व च यदीदमवस्तुबुद्ध्या
त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात् ॥ २१ ॥
देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति
यतोऽध्यगमत्स्वरूपम् ॥ दैवादपेतमुत दैववशादुपेतं
वासो यथा परिकृतं मदिरामदांधः ॥ २२ ॥

देहोऽपि दैववशगः खलु कर्म यावत्स्वारंभकं प्रतिसमी-
क्षित एव सासुः ॥ तं सप्रपंचमधिरूढसमाधियोगः
स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ २३ ॥
मयैतदुक्तं वो विप्रा गुह्यं यत्सांख्ययोगयोः ॥
जानीतमागतं यज्ञं युष्मद्धर्मविवक्षया ॥ २४ ॥
अहं योगस्य सांख्यस्य सत्यस्यर्तस्य तेजसः ॥
परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च ॥ २५ ॥
मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ॥
सुहृदं प्रियमात्मानं साम्यासंगादयोऽगुणाः ॥ २६ ॥
इति मे छिन्नसंदेहा मुनयः सनकादयः ॥
सभाजयित्वा परया भक्त्यागृणत संस्तवैः ॥ २७ ॥
तैरहं पूजितः सम्यक्संस्तुतः परमर्षिभिः ॥
प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ॥ २८ ॥

॥ इति श्रीमद्भागवते एकादशस्कंधे हंसगीताध्यायः ॥

---

॥ इति हंसगीता समाप्ता ॥

---



## ॥ अथ पांडवगीता प्रारभ्यते ॥

पांडव उवाच॥ प्रह्लादनारदपराशरपुण्डरीकव्यासांबरीषशुकशौ-
नकभीष्मदाल्भ्यान् ॥ रुक्मांगदार्जुनवसिष्ठबिभीषणा-
दीन्पुण्यानिमान्परमभागवतान्स्मरामि ॥ १ ॥
लोमहर्षण उवाच ॥ धर्मो विवर्धति युधिष्ठिरकीर्तनेन पापं
प्रणश्यति वृकोदरकीर्तनेन ॥ शत्रुर्विनश्यति धनंजय-
कीर्तनेन माद्रीसुतौ कथयतां न भवन्ति रोगाः ॥ २ ॥
ब्रह्मोवाच ॥ ये मानवा विगतरागपरावरज्ञा नारायणं
सुरगुरुं सततं स्मरंति ॥ ध्यानेन तेन हतकिल्बिष-
चेतनास्ते मातुः पयोधररसं न पुनः पिबंति ॥३॥
इंद्र उवाच ॥ नारायणो नाम नरो नराणां प्रसिद्धचोरः
कथितः पृथिव्याम् ॥ अनेकजन्मार्जितपापसंचयं
हरत्यशेषं स्मरतां सदैव ॥ ४ ॥
युधिष्ठिर उवाच ॥ मेघश्यामं पीतकौशेयवासं श्रीवत्सांकं
कौस्तुभोद्भासितांगम् ॥ पुण्योपेतं पुंडरीकायताक्षं
विष्णुं वंदे सर्वलोकैकनाथम् ॥ ५ ॥
भीमसेन उवाच ॥ जलौघमग्ना सचराचरा धरा विषा-
णकोटयाखिलविश्वमूर्तिना ॥ समुद्धृता येन वराहरूपिणा
स मे स्वयंभूर्भगवान् प्रसीदताम् ॥ ६ ॥
अर्जुन उवाच ॥ अचिंत्यमव्यक्तमनंतमव्ययं विभुं प्रभुं भावि-
तविश्वभावनम् ॥ त्रैलोक्यविस्तारविचारकारकं हरिं
प्रपन्नोऽस्मि गतिं महात्मनाम् ॥ ७ ॥
नकुल उवाच ॥ यदि गमनमधस्तात्कालपाशानुबद्धो यदि च
कुलविहीने जायते पक्षिकीटे ॥ कृमिशतमपि गत्वा
जायते चांतरात्मा मम भवतु हृदिस्थे केशवे

भक्तिरेका ॥ ८ ॥

सहदेव उवाच ॥ तस्य यज्ञवराहस्य विष्णोरतुलतेजसः ॥
प्रणामं ये प्रकुर्वंति तेषामपि नमो नमः ॥ ९ ॥

कुंत्युवाच ॥ स्वकर्मफलनिर्दिष्टां यां यां योनिं व्रजाम्यहम् ॥
तस्यां तस्यां हृषीकेश त्वयि भक्तिर्दृढाऽस्तु मे ॥ १० ॥

माद्र्युवाच ॥ कृष्णे रताः कृष्णमनुस्मरंति रात्रौ च कृष्णं
पुनरुत्थिता ये ॥ ते भिन्नदेहा प्रविशन्ति कृष्णं
हविर्यथा मंत्रहुतं हुताशे ॥ ११ ॥

द्रुपद उवाच ॥ कीटेषु पक्षिषु मृगेषु सरीसृपेषु रक्षःपिशाच-
मनुजेष्वपि यत्र यत्र ॥ जातस्य मे भवतु केशव त-
त्प्रसादात्त्वय्येव भक्तिरचलाऽव्यभिचारिणी च ॥ १२ ॥

सुभद्रोवाच ॥ एकोऽपि कृष्णस्य कृतः प्रणामो दशा-
श्वमेधावभृथेन तुल्यः ॥ दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥ १३ ॥

अभिमन्युरुवाच ॥ गोविंद गोविंद हरे मुरारे गोविंद
गोविंद रथांगपाणे ॥ गोविंद गोविंद मुकुंद कृष्ण गो-
विंद गोविंद नमो नमस्ते ॥ १४ ॥

धृष्टद्युम्न उवाच ॥ श्रीराम नारायण वासुदेव गोविंद
वैकुंठ मुकुंद कृष्ण ॥ श्रीकेशवानंत नृसिंह विष्णो मां
त्राहि संसारभुजंगदष्टम् ॥ १५ ॥

सात्यकिरुवाच ॥ अप्रमेय हरे विष्णो कृष्ण दामोदराच्युत ॥
गोविंदानंत सर्वेश वासुदेव नमोऽस्तु ते ॥ १६ ॥

उद्धव उवाच ॥ वासुदेवं परित्यज्य योऽन्यं देवमुपासते ॥
तृषितो जाह्नवीतीरे कूपं वांछति दुर्भगः ॥ १७ ॥

धौम्य उवाच ॥ अपां समीपे शयनासनस्थं दिवा च
रात्रौ च यथाधिगच्छताम् ॥ यद्यस्ति किंचित्सुकृतं कृतं

मया जनार्दनस्तेन कृतेन तुष्यतु ॥ १८ ॥

संजय उवाच ॥ आर्ता विषण्णाः शिथिलाश्च भीता घोरेषु व्याघ्रादिषु वर्तमानाः ॥ संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवंति ॥ १९ ॥

अक्रूर उवाच ॥ अहं तु नारायणदासदासदासस्य दासस्य च दासदासः ॥ अन्येभ्य ईशो जगतो नराणां तस्मादहं चान्यतरोऽस्मि लोके ॥ २० ॥

विदुर उवाच ॥ वासुदेवस्य ये भक्ताः शांतास्तद्गतमानसाः ॥ तेषां दासस्य दासोऽहं भवे जन्मनि जन्मनि ॥ २१ ॥

भीष्म उवाच ॥ विपरीतेषु कालेषु परिक्षीणेषु बंधुषु ॥ त्राहि मां कृपया कृष्ण शरणागतवत्सल ॥ २२ ॥

द्रोणाचार्य उवाच ॥ ये ये हताश्चक्रधरेण राजंस्त्रैलोक्यनाथेन जनार्दनेन ॥ ते ते गता विष्णुपुरीं प्रयाताः क्रोधोऽपि देवस्य वरेण तुल्य. ॥ २३ ॥

कृपाचार्य उवाच ॥ मज्जन्मनः फलमिदं मधुकैटभारे मत्प्रार्थनीय मदनुग्रह एष एव ॥ त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥ २४ ॥

अश्वत्थामोवाच ॥ गोविंद केशव जनार्दन वासुदेव विश्वेश विश्व मधुसूदन विश्वनाथ ॥ श्रीपद्मनाभ पुरुषोत्तम पुष्कराक्ष नारायणाच्युत नृसिंह नमो नमस्ते ॥ २५ ॥

कर्ण उवाच ॥ नान्यं वदामि न शृणोमि न चिंतयामि नान्यं स्मरामि न भजामि न चाश्रयामि ॥ भक्त्या त्वदीयचरणांबुजमंतरेण श्रीश्रीनिवास पुरुषोत्तम देहि दास्यम् ॥ २६ ॥

धृतराष्ट्र उवाच ॥ नमो नमः कारणवामनाय नारायणायामि-
तविक्रमाय ॥ श्रीशार्ङ्गचक्राब्जगदाधराय नमोऽस्तु त-
स्मै पुरुषोत्तमाय ॥ २७ ॥
गांधार्युवाच ॥ त्वमेव माता च पिता त्वमेव त्वमेव बंधुश्च
सखा त्वमेव ॥ त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं
मम देवदेव ॥ २८ ॥
द्रौपद्युवाच ॥ यज्ञेशाच्युत गोविंद माधवानंत केशव ॥
कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तु ते ॥ २९ ॥
जयद्रथ उवाच ॥ नमः कृष्णाय देवाय ब्रह्मणेऽनंतमूर्तये ॥
योगेश्वराय योगाय त्वामहं शरणं गतः ॥ ३० ॥
विकर्ण उवाच ॥ कृष्णाय वासुदेवाय देवकीनंदनाय च ॥
नंदगोपकुमाराय गोविंदाय नमो नमः ॥ ३१ ॥
सोमदत्त उवाच ॥ नमः परमकल्याण नमस्ते विश्वभावन ॥
वासुदेवाय शांताय यदूनां पतये नमः ॥ ३२ ॥
विराट उवाच ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥
जगद्धिताय कृष्णाय गोविंदाय नमो नमः ॥ ३३ ॥
शल्य उवाच ॥ अतसीपुष्पसंकाशं पीतवाससमच्युतम् ॥
ये नमस्यंति गोविंदं न तेषां विद्यते भयम् ॥ ३४ ॥
बलभद्र उवाच ॥ कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव ॥
संसारार्णवमग्नानां प्रसीद पुरुषोत्तम ॥ ३५ ॥
श्रीकृष्ण उवाच ॥ कृष्ण कृष्णेति कृष्णेति यो मां स्मरति
नित्यशः ॥ दलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम्
सत्यं ब्रवीमि मनुजाः स्वयमूर्ध्वबाहुर्यो मां
मुकुंद नरसिंह जनार्दनेति ॥ जीवो जपत्यनुदिनं
मरणे रणे वा पाषाणकाष्ठसदृशाय ददाम्यभीष्टम् ॥३७॥
सूत उवाच ॥ तत्रैव गंगा यमुना च वेणी गोदावरी सिंधुसरस्व-

तीं च ॥ सर्वाणि तीर्थानि वसंति तत्र यत्राच्युतोदा-
रकथाप्रसंगः ॥ ३८ ॥

यम उवाच ॥ नरके पच्यमानं तु यमेन परिभाषितम् ॥
किं त्वया नार्चिंतो देवः केशवः क्लेशनाशनः ॥३९॥

नारद उवाच ॥ जन्मांतरसहस्रेण तपोध्यानसमाधिभिः ॥
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ ४० ॥

प्रल्हाद उवाच ॥ नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् ॥
तेषु तेष्वचला भक्तिरच्युताऽस्तु सदा त्वयि ॥४१ ॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी ॥
त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु ॥ ४२ ॥

विश्वामित्र उवाच ॥ किं तस्य दानैः किं तीर्थैः किं तपोभिः
किमध्वरैः ॥ यो नित्यं ध्यायते देवं नराणां मनासि
स्थितम् ॥ ४३ ॥

जमदग्निरुवाच ॥ नित्योत्सवस्तदा तेषां नित्यश्रीर्नित्यमंगलम्॥
येषां हृदिस्थो भगवान्मंगलायतनं हरिः ॥ ४४ ॥

भरद्वाज उवाच ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः॥
येषामिंदीवरश्यामो हृदयस्थो जनार्दनः ॥ ४५ ॥

गौतम उवाच ॥ गोकोटिदानं ग्रहणेषु काशीप्रयागगंगाऽयुतक-
ल्पवासः ॥ यज्ञायुतं मेरुसुवर्णदानं गोविंदनाम्ना न
कदापि तुल्यम् ॥ ४६ ॥

अत्रिरुवाच ॥ गोविंदेति सदा स्नानं गोविंदेति सदा जपः ॥
गोविंदेति सदा ध्यानं सदा गोविंदकीर्तनम् ॥ ४७ ॥
अक्षरं हि परं ब्रह्म गोविंदेत्यक्षरत्रयम् ॥
तस्मादुच्चरितं येन ब्रह्मभूयाय कल्पते ॥ ४८ ॥

श्रीशुक उवाच ॥ अच्युतः कल्पवृक्षोऽसावनंतः कामधेनवः ॥
चिंतामाणिश्च गोविंदो हरिनाम विचिंतयेत् ॥ ४९ ॥

हरिरुवाच ॥ जयति जयति देवो देवकीनंदनोऽयं जयति
जयति कृष्णो वृष्णिवंशप्रदीपः ॥ जयति जयति मेघश्या-
मलः कोमलांगो जयति जयति पृथ्वीभारनाशो मुकुंदः ५०
पिप्पलायन उवाच ॥ श्रीमन्नृसिंहविभवे गरुडध्वजाय तापत्र-
योपशमनाय भवौषधाय ॥ कृष्णाय वृश्चिकजलाग्निभु-
जंगरोगक्लेशव्ययाय हरये गुरवे नमस्ते ॥ ५१ ॥
आविर्होत्र उवाच ॥ कृष्ण त्वदीयपदपंकजपंजरान्ते अद्यैव मे
विशतु मानसराजहंसः ॥ प्राणप्रयाणसमये कफवात-
पित्तैः कंठावरोधनविधौ स्मरणं कुतस्ते ॥ ५२ ॥
विदुर उवाच ॥ हरेर्नामैव नामैव नामैव मम जीवनम् ॥
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ ५३॥
वसिष्ठ उवाच ॥ कृष्णेति मंगलं नाम यस्य वाचि प्रवर्तते॥
भस्मीभवंति तस्याशु महापातककोटयः ॥ ५४ ॥
अरुंधत्युवाच ॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥
प्रणतक्लेशनाशाय गोविंदाय नमो नमः ॥ ५५ ॥
कश्यप उवाच ॥ कृष्णानुस्मरणादेव पापसंघातपंजरः ॥
शतधा भेदमाप्नोति गिरिर्वज्रहतो यथा ॥ ५६ ॥
दुर्योधन उवाच ॥ जानामि धर्मं न च मे प्रवृत्तिर्जानामि पापं
न च मे निवृत्तिः ॥ केनापि देवेन हृदि स्थितेन यथा
नियुक्तोऽस्मि तथा करोमि ॥ ५७ ॥
यत्र स्वगुणदोषेण क्षम्यतां मधुसूदनः ॥
अहमेवमहं हंतुं मम दोषो न विद्यते ॥ ५८ ॥
भृगुरुवाच ॥ नामैव तव गोविंद कलौ त्वत्तः शताधिकम् ॥
ददात्युच्चारणान्मुक्तिं विना अष्टांगयोगतः ॥ ५९ ॥
लोमहर्षण उवाच ॥ नमामि नारायणपादपंकजं करोमि नारा-
यणपूजनं सदा ॥ वदामि नारायणनाम निर्मलं स्मरा-

मि नारायणतत्त्वमव्ययम् ॥ ६० ॥

शौनक उवाच ॥ स्मृत्वा सकलकल्याणभाजनं यत्र जायते ॥
पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥ ६१ ॥

गर्ग उवाच ॥ नारायणेति मंत्रोऽस्ति वागस्ति वशवर्तिनी ॥
तथापि नरके घोरे पततीत्येतदद्भुतम् ॥ ६२ ॥

दाल्भ्य उवाच ॥ किं तस्य बहुभिर्मंत्रैर्भक्तिर्यस्य जनार्दने ॥
नमो नारायणायेति मंत्रः सर्वार्थसाधकः ॥ ६३ ॥

वैशंपायन उवाच ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ६४ ॥

अंगिरा उवाच ॥ हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ॥
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥ ६५ ॥

पराशर उवाच ॥ सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ॥
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ ६६ ॥

पौलस्त्य उवाच ॥ हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये ॥
नारायणाख्यपीयूषं पिब जिह्वे निरंतरम् ॥ ६७ ॥

व्यास उवाच ॥ सत्यं सत्यं पुनः सत्यं भुजमुत्थाप्य चोच्यते ॥
न वेदाच्च परं शास्त्रं न देवः केशवात्परः ॥ ६८ ॥

धन्वंतरिरुवाच ॥ अच्युतानंत गोविंद नामोच्चारणभेषजात् ॥
नश्यंति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ ६९ ॥

मार्कंडेय उवाच ॥ सा हानिस्तन्महच्छिद्रं सा चांधजडमूढता ॥
यन्मुहूर्तं क्षणं वापि वासुदेवं न चिंतयेत् ॥ ७० ॥

अगस्त्य उवाच ॥ निमिषं निमिषार्धं वा प्राणिनां विष्णुचिंत-
नम् ॥ क्रतुकोटिसहस्राणां ध्यानमेकं विशिष्यते ॥ ७१ ॥
मनसा कर्मणा वाचा ये स्मरंति जनार्दनम् ॥
तत्र तत्र कुरुक्षेत्रं प्रयागो नैमिषं वनम् ॥ ७२ ॥

श्रीशुक उवाच ॥ आलोड्य सर्वशास्त्राणि विचार्यैवं पुनःपुनः ॥

इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ७३ ॥
श्रीमहादेव उवाच ॥ शरीरं च नवाच्छिद्रं व्याधिग्रस्तं कलेवरम्॥
औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥ ७४ ॥
शौनक उवाच ॥ भोजनाच्छादने चिंता वृथा कुर्वंति मानवाः॥
योऽसौ विश्वंभरो देवः स भक्तान् किमुपेक्षते ॥ ७५ ॥
एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥
कीर्तयंति सुरश्रेष्ठं देवं नारायणं विभुम् ॥ ७६ ॥
सनत्कुमार उवाच ॥ यस्य हस्ते गदा चक्रं गरुडो यस्य वाहनम्॥
शंखः करतले यस्य स मे विष्णुः प्रसीदतु ॥ ७७ ॥
इदं पवित्रमायुष्यं पुण्यं पापप्रणाशनम् ॥
यः पठेत्प्रातरुत्थाय वैष्णवं स्तोत्रमुत्तमम् ॥ ७८ ॥
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥
धर्मार्थकाममोक्षार्थं पांडवैः परिकीर्तितम् ॥ ७९ ॥
आकाशात्पतितं तोयं यथा गच्छति सागरम् ॥
सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥ ८० ॥

---

॥ इति पांडवगीता समाप्ता ॥



